# अथ मृत्युंजय–महारथी–शान्तेः प्रयोगदर्शनम् ।

* * * * * * * * * * * * * * * * *

| | |
|---|---|
| प्रधानदेवता : | : मृत्युंजयमहारथः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : मा नो महान्त । |
| हवनीयद्रव्याणि : | : समिध्-आज्य-चरु-पायसानि । |
| हवनसंख्या : | : १००८ वा १०८ वा यथाशक्ति । |
| उपदेवता : | : त्र्यंबकः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : त्र्यंबकं यजामहे । |
| हवनीयद्रव्यं : | : घृताक्तातिलाः । |
| हवनसंख्या : | : १००८ वा १०८ वा यथाशक्ति । |
| नक्षत्रदेवता : | : यजमानस्य यद् जन्मनक्षत्रं तद् देवता । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : नाममंत्रः । |
| हवनद्रव्यं : | : केवलं आज्यम् । |
| आहुतिसंख्या : | : २८ वा ८ वा यथाशक्ति । |

सर्वशान्तीनां संकल्पस्वरूपं एकमेव । केवलं वयःसंख्याभेदः । सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत् । अनन्तरम् स्विष्टकृतादि–प्रायश्चित्तहोमान्ते बलिदानम् पूर्णाहुतिं संस्रावादिहोमशेषं समाप्य कलशोदकैः यजमानं अभिषिंचेत् । नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत । देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम्, शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः । यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः । त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति । अयम् उत्तरांगविधिः सर्वत्र समानः ।



# अथ मृत्युंजय–महारथी शान्तिः ।

[पञ्चाधिक–षष्टितमे वर्षे (६५) प्राप्ते क्रियमाणा ।]

अथ कर्ता यजमानः जन्मनः सकाशात् **पंचाधिक-षष्टितमे वर्षे प्राप्ते**, जन्मदिने जन्मनक्षत्रे चंद्रानुकूल्ये शुभेऽहनि वा कृताभ्यंगः कृतनित्यक्रियः, कृताग्निसिद्धः शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः, प्राणानायम्य, पंचगव्य-प्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मनः सकाशात् **पंचाधिक–षष्टितमे वर्षे प्राप्ते** सूचित–संभाव्यमान–नानाविधरोग-दृष्टिमान्द्य-छायावैकृत्य-भार्या-पुत्रादिवियोग-धनधान्य-पशु-क्षयादि-विविध-अरिष्ट-निरसनार्थं जन्मराशि-जन्म-लग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित-आदित्यादि नवग्रहाणां उत्पन्नो-त्पत्स्यमानपीडानिरसनपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना यथाशक्तिसंभृतसंभारैः यथाज्ञानतः सग्रहमखां **महारथ–मृत्युंजय–देवता–प्रीत्यर्थं मृत्युंजय–महारथीं शान्तिं करिष्ये** । तदंगं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं आचार्यवरणं च करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं करिष्ये इति संकल्प्य तानि कृत्वा, वृताचार्यः स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित–**मृत्युंजय-महारथी-शान्ति**–कर्मणि वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये । तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त–जप–पूर्वकम् भू–शुद्ध्यादि करिष्ये । आदौ निर्विघ्नार्थं महागणपतिस्मरणं च करिष्ये । इत्यादि गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन–सर्वतोभद्रस्य (लिंगतोभद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि-मंडल-देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवता-स्थापनमिच्छन्ति ।) सवस्त्रपीठासने तण्डुलराश्युपरि महीद्यौरित्यादिना कलशं प्रतिष्ठाप्य, वरुणप्रार्थनान्तं कृत्वा, पूर्णपात्रे अष्टदलमध्ये कर्णिकायां कृताग्न्युत्तारण-पूर्विकायां सुवर्णप्रतिमायां **प्रधानदेवं मृत्युंजयमहारथं आवाहयेत् मा नो महान्त इति मंत्रेण । तद्यथा मा नो महान्त इति मंत्रस्य आंगिरसकुत्सो मृत्युंजय-महारथरुद्रो जगती मृत्युंजयमहारथरुद्रावाहने विनियोगः ।**

**ॐ मा नो महान्तमुत मा नोऽअर्भकं**
**मा नऽउक्षन्तमुत मा न उक्षितम् ।**
**मा नो वधीः पितरं मोत मातरं**
**मा नः प्रियाः स्तन्वो रुद्र रीरिषः ॥**

(ऋ-अ-१, अ-८, वर्ग-६)

यजमानः तैत्तिरीयशाखीयश्चेत् रुद्रपाठस्थो मंत्रो ग्राह्यः ।

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां मृत्युंजयमहारथरुद्रं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि । ॐ भूः मृत्युंजयं महारथं रुद्रं आवा० । ॐ भुवः मृत्युंजयं महारथं रुद्रं आवा० । ॐ स्वः मृत्युंजयं महारथं रुद्रं आवा० । ॐ भूर्भुवःस्वः मृत्युंजयं महारथं रुद्रं आवा० । तदुत्तरतः त्र्यंबकेति मंत्रेण **त्र्यंबकं** आवाह्य, तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् संपूज्य, प्रधानदेवतासमीपे तन्मंत्रं (मा नो महान्त०) अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थंडिलान्तिकमेत्य, अद्येत्यादि० संकल्पित-मृत्युंजय-महारथी-शांतिकर्मणि स्थंडिलादिसकलं कर्म करिष्ये । वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादिनवग्रहानावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा स्थंडिलसमीपमेत्य समिद्द्वयेत्यन्वादध्यात् । चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात् । **अत्र प्रधानं देवं मृत्युंजयं महारथं रुद्रं, मा नो महान्त-मंत्रेण समिध्-आज्य-चरु-पायस-द्रव्यैः चतुर्भिः प्रतिद्रव्यं (अष्टोत्तरसहस्र)/ अष्टोत्तरशतसंख्याकाभिराहुतिभिर्वा, मृत्युंजय-त्र्यंबकं घृताक्ततिलद्रव्येण सहस्रसंख्याकाहुतिभिः नक्षत्रदेवतां नाममंत्रेण अष्टाविंशति वा अष्टसंख्याका-भिर्वाज्यद्रव्येण यक्ष्ये ।** शेषेण स्विष्टकृतमिति चक्षुष्यन्तं कर्म कृत्वा यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय **स्विष्टकृतात्** प्राक् **विविधसूक्त-पाठजपः कार्यः** । तानि च सूक्तानि, श्रीसूक्तं, रुद्राध्यायं, आयुष्यमंत्रान् जपेत् । ते च ऋक्द्वयं एष वां देवा परावतो सप्तदशार्चं, आ नो भद्रा दशार्चं, इति वा इति आयुष्यमिति च सूक्तं पठेत् । ततः जप्त्वा वेदपारायणं कार्यं; तदसंभवे पुरुषसूक्तं अग्निमीळे इति नवर्चं सूक्तं च पठेत् । ततः स्विष्टकृतादि-प्रायश्चित्तहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा, संस्रावादिहोमशेषं समाप्य, स्थापितकलशोदकैः सकुटुंबं



बंधुवर्गयुतं यजमानं अभिषिंचेत् । तत्र अभिषेकमंत्राः—समुद्रज्येष्ठा० शं न इंद्राग्नी० परं मृत्यो० एष वां देवा इति ऋग्द्वयं० परावतो सप्तदशार्चं, स्वादिष्ठयेति दशार्चं, अक्षिभ्यां षट्भिः, यज्जाग्रत इति षण्णाम् । ग्रहमंत्रमुख्यदेवतामंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः ।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः ।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात् । विभूतिं धृत्वा आ नो भद्रा इति महाशांतिजपपूर्वकं देवतोत्तरपूजने कृते, मार्कंडेयादीन् प्रार्थयेत । ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत् । तत्र मंत्रः **'सतिलं गुडसंमिश्रं अंजल्यर्धमितं पयः मार्कंडेयात् वरं लब्ध्वा पिबाम्या-युर्विवृद्धये ।'** इति पिबेत् । ततः कांस्यपात्रे घृतमासिच्य, तत्र **'रूपं रूपं'** इति मंत्रेण आज्यावलोकनं कृत्वा, तत्पात्रं सदक्षिणाकं ब्राह्मणाय दत्त्वा, गो-भू-तिल-हिरण्यादि दशदानानि कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा, सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यो दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः । तिलपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे ॥' इति । पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य, पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यो दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात् । द्विराचम्य, त्रिवारं विष्णुस्मरणं कुर्यात् इति ।

**॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी-विरचिता**
**मृत्युंजय-महारथी-शान्तिः समाप्ता ।**

**॥ श्रीकृष्णार्पणमस्तु ॥**

# अथ भैमरथी–शान्ति–प्रयोगः ।

* * * * * * * * * * * * * * * * *

तत्रादौ मूलवचनानि । तदुक्तं बृहच्छौनकीये ॥

'अथ भैमरथीं शान्तिं भगवान् शौनकोऽब्रवीत्
जननात्सप्ततौ वर्षे मृत्युर्भीमरथो भवेत् ॥ १ ॥

षष्मासान्मृत्युमाप्नोति धनहानिं तथैव च
पुत्रदारादिनाशश्च द्रव्यधान्यपशुक्षयः ॥ २ ॥

तद्दोषशमनार्थाय भगवान् शौनकोऽब्रवीत्
जन्मर्क्षे वानुकूलर्क्षे शान्तिं कुर्याद्विचक्षणः ॥ ३ ॥

देवालये नदीतीरे स्वगृहे वा शुभे स्थले
गृहस्यैशानदिग्भागे मण्डपं कारयेदथ ॥ ४ ॥

व्रीहिभारं तु निक्षिप्य तण्डुलांस्तु तदर्धकम्
तदर्धं तिलभारः स्यात् पद्ममष्टदलं स्मृतम् ॥ ५ ॥

तस्योपरि न्यसेत्कुंभान् तंतुवस्त्रादिवेष्टितान्
ह्रींकारोपरि विन्यस्य भीमं मृत्युंजयं यजेत् ॥ ६ ॥

पलमात्रं सुवर्णेन तदर्धार्धेन वा पुनः
महावरुणमभ्यर्च्य लोकपालादिकानथ ॥ ७ ॥

अधि-प्रत्यधि-देवौ च तदर्धेन प्रकल्पयेत्
आचार्यं वरयित्वा तु ऋत्विजो वरयेदथ ॥ ८ ॥



उपचारैः षोडशभिः प्रधानं देवमर्चयेत्
यथोक्तपूजां कृत्वा तु तत्तन्मंत्रान् जपेदथ ॥ ९ ॥

स्तुहि श्रुतेति मंत्रेण प्रधानं जपमाचरेत्
वेदपारायणजपं ततो द्वारजपं तथा ॥ १० ॥

नमकं चमकं चैव श्रीसूक्तं भीमसूक्तकम्
मण्डपात्पश्चिमे भागे कुण्डं स्याच्चतुरस्त्रकम् ॥ ११ ॥

स्वसूत्रोक्तेन मार्गेण आज्यभागान्तमाचरेत्
प्रधानमंत्रकैः कुर्यात् समिच्चर्वाज्यकैः क्रमात् ॥ १२ ॥

नवग्रहाणां मंत्रेण तिलद्रव्येण कारयेत्
अष्टोत्तरं सहस्रं वा अष्टोत्तरशतं तथा ॥ १३ ॥

प्रधानहोमः कर्तव्यः तिलैर्होमस्तथैव च
वरुणं लोकपालांश्च ह्यधिप्रत्यधिदेवते ॥ १४ ॥

ततः स्विष्टकृतं हुत्वा ग्रहयज्ञं समापयेत्
यजमानाभिषेकं च आचार्यः कारयेदथ ॥ १५ ॥

कुंभदानं ततः कुर्यात् दश दानानि कारयेत्
दीनांधकदरिद्रेभ्यः भूरिदानं समाचरेत् ॥ १६ ॥

ब्राह्मणान् भोजयेत् पश्चादाशिषो वाचयेदथ
सर्वदुःखनिवृत्तिः स्यात् सर्वदा सुखमेधते ॥ १७ ॥

शत्रवोऽपि वशं यान्ति पुत्रपौत्रप्रवर्धनम्
हरिमेव स्मरेन्नित्यं कर्म पूर्वापरेऽपि च ॥ १८ ॥

**इति बृहच्छौनकीये सप्तत्यब्दिका भैमरथी शान्तिः ॥**

# अथ भैमरथी-शान्तेः प्रयोगदर्शनम् ।

* * * * * * * * * * * * * * * * * *

| | |
|---|---|
| प्रधानदेवता : | : भीमरथ-मृत्युंजय-रुद्रः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : स्तुहि श्रुतमिति । |
| हवनीयद्रव्यं : | : घृताक्ततिलाः । |
| हवनसंख्या : | : १००८ वा १०८ वा यथाशक्ति । |
| अधिदेवता : | : वरुणः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : अवते हेळो० । |
| हवनीयद्रव्यं : | : घृताक्ततिलाः । |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति । |
| प्रत्यधिदेवता : | : आशापालः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : आशानामाशा । |
| हवनीयद्रव्यं : | : घृताक्ततिलाः । |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति । |
| उपदेवता : | : त्र्यंबकः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : त्र्यंबकं यजामहे । |
| हवनीयद्रव्यं : | : घृताक्ततिलाः । |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति । |
| नक्षत्रदेवता : | : यजमानस्य जन्मनक्षत्रं तद् देवता । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : नाममंत्रः । |
| हवनीयद्रव्यं : | : आज्यम् । |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति । |

सर्वशान्तीनां संकल्पस्वरूपं एकमेव। केवलं वयःसंख्याभेदः। सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत्। अनन्तरम् स्विष्टकृतादि-प्रायश्चित्तहोमान्ते बलिदानम् पूर्णाहुतिं संस्रावादिहोमशेषं समाप्य कलशोदकैः यजमानं अभिषिंचेत्। नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत। देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम्, शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः। यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः।
त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति। **अयम् उत्तरांगविधिः सर्वत्र समानः।**



# अथ भैमरथी शान्तिः ।

**[ सप्ततितमे वर्षे (७०) क्रियमाणा ।]**

अथ कर्ता यजमानः जन्मनः सकाशात् **सप्ततितमे वर्षे प्राप्ते**, जन्मदिने, जन्मनक्षत्रे, चन्द्रानुकूल्ये शुभेऽहनि वा, कृताभ्यंगः, कृतनित्यक्रियः, कृताग्निसिद्धिः, शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः प्राणानायम्य, पंचगव्यप्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मनः सकाशात् **सप्ततितमे** वर्षे प्राप्ते सूचित-संभाव्यमान-नानाविधरोग-दृष्टिमान्द्य-छायावैकृत्य-भार्यापुत्रादि-वियोग-धनधान्यपशुक्षयादि-अरिष्ट-निरसनार्थं जन्मराशिजन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित-आदित्यादि-नवग्रहाणां उत्पन्नोत्पत्स्यमान-पीडापरिहार-पूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना यथासंभृतसंभारैः यथाशक्ति यथाज्ञानतः सग्रहमखां **शौनकोक्तां भैमरथीं शान्तिं करिष्ये।** तदंगं स्वस्ति-पुण्याहवाचनं, मातृकापूजननांदीश्राद्धं, आचार्यवरणं च करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं करिष्ये। इति संकल्प्य, तानि कृत्वा वृताचार्यः स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित-**भैमरथी-शान्तिकर्मणि** वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये। तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त-जप-पूर्वकम् भू-शुद्ध्यादि करिष्ये, आदौ निर्विघ्नार्थं महागणपति स्मरणं च करिष्ये। इत्यादि गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन-सर्वतोभद्रस्य (लिंगतो भद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि-मंडल-देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवतास्थापनमिच्छन्ति।) सवस्त्रपीठासने व्रीहिराशिं, तदुपरि तण्डुलराशिं, तदुपरि तिलराशिं च कृत्वा महीद्यौरित्यादिना कलशत्रयं (एकं वा कलशं) संस्थाप्य, पूर्णपात्रे अष्टदले ह्रीं-कारोपरि कर्णिकायां कृताग्न्युत्तारणपूर्विकायां सुवर्णप्रतिमायां स्तुहि श्रुतमिति मंत्रेण भीमरथं मृत्युंजयं प्रतिष्ठाप्य, तद्दक्षिणे अधिदेवतां महावरुणं, उत्तरतः प्रत्यधिदेवतां आशापालांश्च प्रतिष्ठापयेत्। तत्र मंत्रः यथा। **स्तुहि श्रुतमित्यस्य शौनको गृत्समदो भीमो मृत्युंजय-रुद्रस्त्रिष्टुप्। भीमरथ-मृत्युंजयरुद्र-आवाहने विनियोगः।**

ॐ स्तुहि श्रुतं गर्तसदं युवानं
मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानो
ऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥

(अष्टक-२, अ-७, वर्ग-१८)

यजमानः तैत्तिरीयशाखीयश्चेत् रुद्रपाठस्थो वा मंत्रो ग्राह्यः ।

(ऋक्शाखोक्तमंत्रः, न तु रुद्रपाठस्थः ।)

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां भीमरथ-मृत्युंजय-रुद्राय नमः । भीमरथ-मृत्युंजय-रुद्रं सांगं सपरिवारं सायुधं सशक्तिकं आवाहयामि । ॐ भूः भीमरथ-मृत्युंजय-रुद्रं आवा० । ॐ भुवः भीमरथ-मृत्युंजय-रुद्रं आवा० । ॐ स्वः भीमरथ-मृत्युंजय-रुद्रं आवा० । ॐ भूर्भुवः स्वः भीमरथ-मृत्युंजय-रुद्रं आवा० । तद्दक्षिणतः (कलशे) **अव ते हेळ इत्यस्य आजीगर्तिः शुनःशेपो वरुणस्त्रिष्टुप् । वरुणावाहने विनियोगः ।**

अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे
हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेता
राजन्नेनांसि शिश्रथः कृतानि ॥

(अ-१, अ-२. वर्ग-१५)

अस्यां सुवर्णमय्यां मूर्तौ (पूगीफले वा) ॐ भूर्भुवःस्वः वरुणाय नमः, वरुणं आवाहयामि । भूरित्यादि आवाह्य । वामपार्श्वे आशापालानावाह्य । यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता, यदक्षरपरिमाणं तच्छंदः, आशापालावाहने विनियोगः । (एकश्रुत्या पाठः ।)



ॐ आशानामाशापालेभ्यो वाशानामाशा-
पालेभ्यश्चतुर्भ्यो अमृतेभ्यः ।
इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् ।
विश्वा आशामधुना संसृजाम्यनमीवा आप
ओषधयः सन्तु सर्वाः ।
अयं यजमानो मृधे व्यस्यत्व गृभीताः पशवः
सन्तु सर्वे । इति सौत्रमंत्रः ।

अस्यां सुवर्णमय्यां मूर्तौ आशापालेभ्यो नमः । आशापालानावाहयामि । भूः इत्यादि आवाह्य । तदुत्तरतः त्र्यंबकेति मंत्रेण त्र्यंबकं आवाह्य । तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् संपूज्य, प्रधानदेवतासमीपे तन्मंत्रं (स्तुहि श्रुतं गर्त०) अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थंडिलान्तिकमेत्य, अद्येत्यादि० संकल्पित-**भैमरथी**-शांतिकर्मणि स्थंडिलादि-सकलं कर्म करिष्ये । वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादिनवग्रहा-नावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा, स्थंडिलसमीपमेत्य समिद्‌द्वयेत्यन्वादध्यात् । चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात् । **अत्र प्रधानं देवं भीमरथं मृत्युंजय-रुद्रंस्तुहि श्रुतमिति मंत्रेण अष्टोत्तरसहस्र (१००८) संख्याकाहुतिभिः घृताक्ततिलैः अष्टोत्तरशताहुतिभिर्वा (१०८) अधिदेवताप्रत्यधिदेवते च तैरेव द्रव्यैः अष्टोत्तरशतसंख्याकाभिः, अष्टाविंशतिसंख्याभिर्वा मृत्युंजयं त्र्यंबकं त्र्यंबकेतिमंत्रेण घृताक्ततिलद्रव्येण सहस्रसंख्याकाहुतिभिः, नक्षत्रदेवतां नाममंत्रेण अष्टाविंशति-अष्टसंख्याकाभिर्वाज्यद्रव्येण यक्ष्ये।** शेषेण स्विष्टकृतमिति चक्षुष्यन्तं कर्म कृत्वा यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय **स्विष्टकृतात्** प्राक् **विविधसूक्तपाठजपः कार्यः** । तानि च सूक्तानि–श्रीसूक्तं, रुद्राध्यायं, आयुष्य-मंत्रान् जपेत् । ते च ऋक्-द्वयं एष वां देवा वरावतो सप्तदशर्चं, आ नो भद्रा दशर्चं, इति वा इति आयुष्यमिति च सूक्तं पठेत् ।

ततः वेदपारायणं कार्यं, तदसंभवे पुरुषसूक्तं अग्निमीळे इति नवर्चसूक्तं च पठेत्। तत स्विष्टकृतादि प्रायश्चित्तहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावादिहोमशेषं समाप्य, स्थापितकलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानं अभिषिंचेत्। तत्र अभिषेकमंत्राः— समुद्रज्येष्ठा॰ शं न इंद्राग्नी॰ परं मृत्यो॰ एष वां देवा ऋग्द्वयं॰ परावतो सप्तदशर्चं, स्वादिष्टयेति दशर्चं, अक्षिभ्यां षट्भिः, यज्जाग्रत इति षण्णाम्। ग्रहमंत्र-मुख्यदेवतामंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात्। विभूतिं धृत्वा आ नो भद्रा इति महाशांतिजपपूर्वकं देवतोत्तरपूजने कृते, मार्कंडेयादीन् प्रार्थयेत। ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत्। तत्र मंत्रः **'सतिलं गुडसंमिश्रं अंजल्यर्धमितं पयः। मार्कंडेयात् वरं लब्ध्वा पिबाम्यायुर्विवृद्धये।** इति पिबेत्। ततः कांस्यपात्रे घृतमासिच्य, तत्र **'रूपं रूपं'** इति मंत्रेण आज्यावलोकनं कृत्वा तत्पात्रं, सदक्षिणाकं ब्राह्मणाय दत्त्वा गो-भू-तिल-हिरण्यादि-दशदानानि कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा, सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यः दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा, ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः॥ तिलपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे॥' इति। पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यः दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात्। द्विराचम्य, त्रिवारं विष्णुस्मरणं कुर्यात् इति।

**॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी-विरचिता भैमरथी-शान्तिः समाप्ता॥**

**॥ श्रीकृष्णार्पणमस्तु॥**



# अथ ऐंद्री-शान्तेः प्रयोगदर्शनम्।

* * * * * * * * * * * * * * * * * *

प्रधानदेवता : : इंद्रः कौशिकः।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : आ तू न इंद्र॰।
हवनीयद्रव्याणि : : समिद्-आज्य-चरु-पायसानि।
हवनसंख्या : : १००८ वा १०८ वा यथाशक्ति।
परिवारदेवता : : सहस्राक्षादयः ८।
हवनीयद्रव्याणि : : समिद्-आज्य-चरु-पायसानि।
हवनसंख्या : : २८ वा ८ वा यथाशक्ति।
उपदेवता : : त्र्यंबकः।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : त्र्यंबकं यजामहे।
हवनीयद्रव्यं : : घृताक्ततिलाः।
हवनसंख्या : : १००८ वा १०८ वा यथाशक्ति।
नक्षत्रदेवता : : यजमानस्य जन्मनक्षत्रं तद् देवता।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : नाममंत्रः।
हवनीयद्रव्यं : : आज्यम्।
हवनसंख्या : : २८ वा ८ वा यथाशक्ति।

सर्वशान्तीनां संकल्पस्वरूपं एकमेव। केवलं वयःसंख्याभेदः। सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत्। अनन्तरम् स्विष्टकृतादि प्रायश्चित्तहोमान्ते बलिदानम् पूर्णाहुतिं संस्रावादिहोमशेषं समाप्य, कलशोदकैः यजमानं अभिषिंचेत्। नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत। देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम्, शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः। यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः। त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति। अयम् उत्तरांगविधिः सर्वत्र समानः।

# अथ ऐंद्री शान्तिः ।

[पञ्चाधिकसप्ततितमे वर्षे (७५) क्रियमाणा ।]

अथ कर्ता यजमानः जन्मनः सकाशात् **पञ्चाधिकसप्ततितमे वर्षे प्राप्ते**, जन्मदिने, जन्मनक्षत्रे, चंद्रानुकूल्ये शुभेऽहनि वा कृताभ्यंगः, कृतनित्यक्रियः, कृताग्निसिद्धिः, शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः प्राणानायम्य, पंचगव्यप्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य, श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मनः सकाशात् **पञ्चाधिकसप्ततितमे वर्षे** प्राप्ते सूचित–संभाव्यमान–नानाविधरोग–दृष्टिमान्द्य–छायावैकृत्य–भार्यापुत्रादिवियोग–धनधान्यपशुक्षयादि–अरिष्ट-निरसनार्थं जन्मराशिजन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित–आदित्यादि–नवग्रहाणां उत्पन्नोत्पत्स्यमान-पीडापरिहारपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना यथा–संभृत-संभारैः यथाशक्ति यथाज्ञानतः सग्रहमखां **शौनकोक्तां ऐंद्री शांतिं करिष्ये ।** तदंगं स्वस्ति–पुण्याहवाचनं, मातृकापूजननांदीश्राद्धं, आचार्यवरणं च करिष्ये । तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं च करिष्ये । इति संकल्प्य, तानि कृत्वा, वृताचार्यः, स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित–**ऐंद्री शांति**–कर्मणि वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये । तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त–जप–पूर्वकम् भू–शुद्ध्यादि करिष्ये । आदौ निर्विघ्नार्थं महागणपति स्मरणं च करिष्ये । इत्यादि गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन-सर्वतोभद्रस्य (लिंगतोभद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि-मंडल-देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवतास्थापनमिच्छन्ति ।) सवस्त्रपीठासने तण्डुलराश्युपरि महीद्यौरित्यादिना कलशं प्रतिष्ठाप्य, वरुणप्रार्थनान्तं कृत्वा, पूर्णपात्रे अष्टदलमध्ये कर्णिकायां कृताग्न्युत्तारणपूर्विकायां सुवर्णप्रतिमायां–**इंद्रकौशिकम् आ तू न इंद्र कौशिक** इति मंत्रेण **प्रधानदेवं इंद्रकौशिकम् आवाहयेत् । तद्यथा–आ तू न इंद्र** कौशि[illegible] **मधुच्छंदावैश्वामित्र इंद्रोनुष्टुप् इंद्रकौशिकावाहने विनियोगः ।**



**आ तू न इन्द्र कौशिक**
**मन्दसानः सुतं पिब ।**
**नव्यमायुः प्र सू तिर**
**कृधी सहस्रसामृषिम् ॥**
(अ-१, अ-१, वर्ग-२०)

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां इंद्रकौशिकम् साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि । ॐ भूः इंद्रकौशिकम् आवा० । ॐ भुवः इंद्रकौशिकम् आवा० । ॐ स्वः इंद्रकौशिकम् आवा० । ॐ भूर्भुवःस्वः इंद्रकौशिकम् आवा० । इंद्रकौशिकपरितः पूर्वादि–अष्टदिक्षु पूगीफले सहस्राक्षादीन् आवाहयेत् । तद्यथा पूर्वादि-अष्टदिक्षु सर्वत्र ओंकारः सहस्राक्षाय नमः। सहस्राक्षं आवाहयामि। शतक्रतवे नमः। शतक्रतुं आवाहयामि। वज्रपाणये नमः। वज्रपाणिमावाहयामि। पुरंदराय नमः। पुरंदरं आवाहयामि। अभयंकराय नमः। अभयंकरं आवाहयामि। शचीपतये नमः। शचीपतिम् आवाहयामि। स्वर्गाधिपाय नमः। स्वर्गाधिपं आवाहयामि। इंद्राय नमः। इंद्रं आवाहयामि इति क्रमेण । तदुत्तरतः त्र्यंबकेति मंत्रेण **त्र्यंबकं** आवाह्य, तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् संपूज्य, प्रधानदेवतासमीपे तन्मंत्रं (ध्रुवासु त्वा 'आ तू न इन्द्र कौशिक' इति) अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थंडिलान्तिकमेत्य, अद्येत्यादि० संकल्पित-ऐन्द्री-शांतिकर्मणि स्थंडिलादिसकलं कर्म करिष्ये । वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादिनवग्रहानावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा, स्थंडिलसमीपमेत्य, समिद्ध्येत्यन्वादध्यात्। चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात्। अत्र ग्रहहोमे चत्वारि द्रव्याणि। **अत्र प्रधानदेवतां 'इन्द्रकौशिकं तन्मंत्रेण समिध्-आज्य-चरु-पायस-द्रव्यैः चतुर्भिः प्रतिद्रव्यं (अष्टोत्तरसहस्र)/ अष्टोत्तर-शतसंख्याकाभिराहुतिभिर्वा, मृत्युंजयं त्र्यंबकं त्र्यंबकेतिमंत्रेण घृताक्ततिलद्रव्येण सहस्रसंख्याकाहुतिभिः, नक्षत्रदेवतां नाममंत्रेण अष्टाविंशति-अष्टसंख्याकाभिर्वाज्यद्रव्येण सहस्राक्षादि-परिवारदेवताः घृताक्ततिलद्रव्यैः अष्टाष्टसंख्याभिः यक्ष्ये ।** शेषेण स्विष्टकृत-

मिति चक्षुष्यन्तं कर्म कृत्वा यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय, **स्विष्टकृतात् प्राक् विविधसूक्तपाठजपः कार्यः**। तानि च सूक्तानि– श्रीसूक्तं, रुद्राध्यायं, आयुष्यमंत्रान्-जपेत् । ते च ऋक्‌द्वयं एष वां देवा, परावतो सप्तदशर्चं, आ नो भद्रा दशर्चं, इति वा इति आयुष्यमिति च सूक्तं पठेत् । ततः वेदपारायणं कार्यम् । तदसंभवे पुरुषसूक्तं अग्निमीळे इति नवर्चं सूक्तं च पठेत् । ततः स्विष्टकृतादि प्रायश्चित्त-होमान्ते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावादिहोमशेषं समाप्य, स्थापितकलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानं अभिषिंचेत् । तत्र अभिषेकमंत्राः– समुद्रज्येष्ठा० शं न इंद्राग्नी० परं मृत्यो० एष वां देवा ऋग्द्वयं० परावतो सप्तदशर्चं, स्वादिष्टयेति दशर्चं, अक्षिभ्यां षट्भिः, यज्जाग्रत इति षण्णाम् । ग्रहमंत्र-मुख्यदेवतामंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः ।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः ।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात् । विभूतिं धृत्वा आ नो भद्रा इति महाशांतिजपपूर्वकं देवतोत्तरपूजने कृते, मार्कण्डेयादीन् प्रार्थयेत । ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत् । तत्र मंत्रः **'सतिलं गुडसंमिश्रं अंजल्यर्धमितं पयः । मार्कंडेयात् वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ।'** इति पिबेत् । ततः कांस्यपात्रे घृतमासिच्य, तत्र **'रूपं रूपं'** इति मंत्रेण आज्यावलोकनं कृत्वा, तत्पात्रं सदक्षिणाकं ब्राह्मणाय दत्त्वा, गो-भू-तिल-हिरण्यादि दशदानानि, कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा, सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यो दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः । तिलपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे ॥' इति । पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यो दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात् । द्विराचम्य, त्रिवारं विष्णुस्मरणं कुर्यात् इति ।

**॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी–विरचिता**
**॥ ऐन्द्री–शान्तिः समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



# सहस्रचन्द्रदर्शन–शान्तिः ।

**सहस्रचन्द्रदर्शन-शान्तौ सहस्रचन्द्रदर्शन-विचारः ।**

शौनकः–अशीतिवर्षे संप्राप्ते जननान्मरणं ध्रुवम् ।
सहस्रेन्दोर्दर्शनं च जायते वै तदा ध्रुवम् ॥ १ ॥

अस्यार्थ :–जननात् एकोनाशीतिवर्ष(७९)समाप्तौ **अशीति**-(८०)–वर्षारंभे सहस्रचन्द्रदर्शनानि भवन्ति, तदनिष्टम् मरणसदृशं अनिष्टफलदं, तद्दोषपरिहारार्थं शान्तिर्विधेया । इति वचसोऽर्थः ।

आदौ-अत्रोक्तसहस्रचन्द्रदर्शनस्य सहस्रसंख्यापरिपूर्तिप्रकारः प्रदर्श्यते । प्रतिमासं अमावास्यायां सूर्येण सह स्थितस्य नाम लुप्तस्य चन्द्रस्य द्वितीयमासारंभे प्रतिपदि कदाचित् द्वितीयायां चन्द्रदर्शनं भवति । एवं प्रतिवर्षं द्वादश चन्द्रदर्शनानि, एकोनाशीति–वर्ष–समाप्तौ संगुण्य अष्टचत्वारिंशदधिकनवशतानि चन्द्रदर्शनानि (९४८) ततश्च सौरवर्षस्य चान्द्रसंवत्सरस्य समन्वयार्थं पूर्वाचार्यैः मध्ये–

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा अधिकमासः प्रकल्पितः । ते च प्रायः अष्टाविंशतिर्भवन्ति । तांश्च मिलित्वा षट्सप्तत्यधिकनवशतानि (९४८+२८=९७६) चन्द्रदर्शनानि संपन्नानि । तथा खग्रासचन्द्रग्रहणे चन्द्रग्रहणमध्यकालः अमावास्यया सदृशः चन्द्रस्य पूर्णतया लुप्तत्वात् पुनर्दर्शनं शुक्लप्रतिपद्-चन्द्रदर्शन-सदृशम् लोपानंतरं जायमानत्वात् । तानि खग्रासचन्द्रग्रहणानि । एकोनाशीति-वर्षपर्यंतं चतुर्विंशति (कदाचित् अधिकान्यपि) भवन्त्येव, तानि मिलित्वा-अशीति-वर्षारंभे सहस्रचन्द्रदर्शनानि-(९७६+२४=१०००) संपन्नानि । एतदभिप्रायेणैव शौनकेनोक्तम् अशीतिवर्षारंभे सहस्रचन्द्रदर्शनशान्तिर्विधेया इति युक्तं सप्रमाणं निराबाधं च । नात्र संदेहावसरः । अस्य विषयस्य प्रत्ययार्थं अस्माभिः शालिवाहन १८२१ शकादारभ्य १९०० शकपर्यंतं पंचांगस्थानि खग्रासचन्द्रग्रहणानि परिगणितानि तानि च त्रिंशत्-(३०)-अधिकानि भवन्ति, इति कृत्वा–

अस्योऽपि शौनकोक्तवचसि नाक्षेपावसरः । एवं स्थिते ये केचन अदूरदर्शिनः, अशीतिवर्षारंभे चन्द्रदर्शनस्य सहस्रसंख्यापूर्तिर्न भवतीतिकृत्वा एकाशीति-(८१) द्व्यशीति(८२)वर्षारंभे इयं शान्तिर्विधेयेति वदन्ति ते तु भ्रान्ता एव । अविचारित-रमणीयमेतत् इति त्याज्यमेव । शौनकोक्तवचसा अशीतिवर्षारंभे एव इयं शान्तिर्विधेया । श्रद्धया अनुष्ठेया, फलाय कल्पते । इति सर्वं सुस्थम् ।

यत्तु वैखानस-गृह्यसूत्रे :–तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि रवि-वर्षेणाधिगच्छेयुः स दृष्टसहस्रचन्द्रो भवति । तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते इति, तृतीयप्रश्ने एकविंशतिकण्डिकायां इति, एतत्तु तत्सूत्रा-नुसारिभिरनुष्ठेयम्, सौरवर्षमासगणनयोक्तम् ।

इति अशीतिवर्षारंभे चन्द्रदर्शनस्य सहस्रसंख्यापरिपूर्तिविचारः ।

—विद्याविनोद : **नारायणशास्त्री जोशी –आंजर्लेकरः**

## अथ सहस्रचन्द्र–दर्शन–शान्तेः प्रयोगदर्शनम् ।

* * * * * * * * * * * * * * * * *

| | |
|---|---|
| प्रधानदेवता : | : सहस्रसंख्या-दर्शन-गुणवि० चन्द्रः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : नवो नवो भ० । |
| हवनीयद्रव्यं : | : आज्यम् । |
| हवनसंख्या : | : १००८ वा १०८ वा यथाशक्ति । |
| अधिदेवता : | : त्र्यंबकः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : त्र्यंबकं यजमाहे । |
| हवनीयद्रव्यं : | : आज्यम् । |
| हवनसंख्या : | : १०८ वा २८ वा यथाशक्ति । |
| प्रत्यधिदेवता : | : कालस्वरूपसूर्यः । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : आ कृष्णेन । |
| हवनीयद्रव्यं : | : आज्यम् । |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति । |
| नक्षत्रदेवता : | : यजमानस्य यद् जन्मनक्षत्रं तद् देवता । |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : नाममंत्रः । |
| हवनीयद्रव्यं : | : आज्यम् । |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति । |

सर्वशान्तीनां संकल्पस्वरूपं एकमेव । केवलं वयःसंख्याभेदः । सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत् । अनन्तरम् स्विष्टकृतादि-प्रायश्चित्तहोमान्ते बलिदानम्, पूर्णाहुतिं, संस्रावादिहोमशेषं समाप्य कलशोदकैः यजमानं अभिषिंचेत् । नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत । देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम् शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः । यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः । त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति । अयम् उत्तरांगविधिः सर्वत्र समानः ।



## अथ सहस्रचन्द्र–दर्शन–शान्तिः ।

**[ अशीतितमे वर्षे (८०) प्राप्ते क्रियमाणा । ]**

अथ कर्ता यजमानः जन्मनः सकाशात् **अशीतितमे वर्षे प्राप्ते**, जन्मदिने जन्मनक्षत्रे चन्द्रानुकूल्ये शुभेऽहनि वा कृताभ्यंगः कृतनित्यक्रियः, कृताग्निसिद्धिः शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः, प्राणानायम्य पंचगव्यप्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मन, सकाशात् **अशीतितमे वर्षे प्राप्ते** सूचित–संभाव्यमान–नानाविधरोग–दृष्टिमान्द्य–छायावैकृत्य–भार्यापुत्रादिवियोग–धनधान्य–पशुक्षयादि–विविध–अरिष्ट–निरसनार्थं जन्मराशि–जन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित–आदित्यादि–नवग्रहाणां उत्पन्नोत्पत्स्यमानपीडानिरसनपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना यथाशक्तिसंभृत-संभारैः यथाज्ञानतः सग्रहमखां **सहस्रचन्द्र–दर्शन–शान्तिं करिष्ये** । तदंगं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं आचार्यवरणं च करिष्ये । तत्रादौ निर्विघ्नता–सिद्ध्यर्थं महागणपतिपूजनं करिष्ये इति संकल्प्य, तानि कृत्वा, वृताचार्यः स्थंडिलसमीपमुपविश्य आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित–**सहस्रचंद्र–दर्शन–शान्ति**–कर्मणि वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये । तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त–जप–पूर्वकम् भू–शुद्ध्यादि करिष्ये । आदौ निर्विघ्नार्थं महागणपति–स्मरणं च करिष्ये । इत्यादि गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन–सर्वतोभद्रस्य (लिंगतोभद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि-मंडल-देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवता-स्थापनमिच्छन्ति ।) सवस्त्रपीठासने तण्डुलराश्युपरि महीद्यौरित्यादिना कलशं प्रतिष्ठाप्य, वरुणप्रार्थनान्तं कृत्वा, पूर्णपात्रे अष्टदलमध्ये कर्णिकायां कृताग्न्युत्तारणपूर्विकायां सुवर्णप्रतिमायां **सहस्रसंख्याक–दर्शन–गुणविशिष्टं चन्द्रं, नवो नवो भवति० इति मंत्रेण आवाह्य, तद्दक्षिणपार्श्वे अधिदेवतां मृत्युंजयं–त्र्यंबकेति मंत्रेण आवाह्य, तद्वामपार्श्वे कालस्वरूपं सूर्यं आ कृष्णेनेति मंत्रेण स्थापयेत् । तद्यथा नवो नवो भवतीति मन्त्रस्य सूर्या सावित्री चन्द्रस्त्रिष्टुप् । सहस्र-संख्याकदर्शनगुणविशिष्ट-चन्द्रावाहने विनियोगः ।**

ॐ नवो नवो भवति जायमानो
ऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन्
प्र चंद्रमास्तिरते दीर्घमायुः ।
(अ–८, अ–३, वर्ग–२३)

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां सहस्रसंख्याकदर्शनगुणविशिष्टचंद्राय नमः । सहस्रसंख्याकदर्शनगुणविशिष्टचंद्रं सांगं सपरिवारं सायुधं सशक्तिकं आवाहयामि । ॐ भूः सहस्रसंख्याक० चंद्रं आवा० । ॐ भुवः सहस्रसंख्याक० चंद्रं आवा० । ॐ स्वः सहस्रसंख्याक० चंद्रं आवा० । ॐ भूर्भुवःस्वः सहस्रसंख्याक० चंद्रं आवा० । तद्दक्षिणतः **अधिदेवतां मृत्युंजयं त्र्यंबकेति मंत्रेण आवाह्य । त्र्यंबकं मैत्रावरुणिर्वसिष्ठस्त्र्यंबको मृत्युंजयस्त्रिष्टुप् । त्र्यंबक मृत्युंजयावाहने विनियोगः ।**

ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥
(अ–५, अ–४, वर्ग–३०)

अस्यां सुवर्णमय्यां मूर्तौ (पूगीफले वा) ॐ भूर्भुवःस्वः त्र्यंबकाय मृत्युंजयाय नमः । त्र्यंबकं मृत्युंजयं आवाहयामि । भूरित्यादि आवाह्य । वामपार्श्वे प्रत्यधिदेवतां कालस्वरूपसूर्यं आ कृष्णेनेति मंत्रेणावाह्य । आ कृष्णेनांगिरसवसिष्ठःकालस्वरूपः सूर्यः पुर उष्णिक्-कालस्वरूपसूर्यावाहने विनियोगः ।



ॐ आ कृष्णेन रजसा वर्तमानो
निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेन
आ देवो याति भुवनानि पश्यन् ॥
(अ–१, अ–३, वर्ग–६)

अस्यां सुवर्णमय्यां मूर्तौ (पूगीफले वा) कालस्वरूप–सूर्याय नमः । कालस्वरूपं सूर्यं आवाहयामि । भूः इत्यादि आवाह्य । तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् संपूज्य, प्रधानदेवतासमीपे तन्मंत्रं (नवो नवो भवति) अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थंडिलान्तिकमेत्य, अद्येत्यादि० संकल्पित–**सहस्रचंद्रदर्शन**–शांतिकर्मणि स्थंडिलादि–सकलं कर्म करिष्ये । वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादि-नवग्रहानावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा, स्थंडिल-समीपमेत्य समिद्द्वयेत्यन्वादध्यात् । चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात् । **अत्र प्रधानं देवं सहस्रसंख्याकदर्शनगुणविशिष्टचंद्रं नवो नवो भवति इति मंत्रेण अष्टोत्तरसहस्र (१००८) संख्याकाहुतिभिः** आज्याहुतिभिः, अशक्तौ **अष्टोत्तर-शताहुतिभिर्वा (१०८) अधिदेवताप्रत्यधिदेवते च तैरेव द्रव्यैः अष्टोत्तर-शतसंख्याकाभिः, अष्टाविंशतिसंख्याभिर्वा, नक्षत्रदेवतां नाममंत्रेण अष्टा-विंशति–अष्टसंख्याकाभिर्वाज्यद्रव्येण यक्ष्ये ।** शेषेण स्विष्टकृतमिति चक्षुष्यन्तं कर्म कृत्वा यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय **स्विष्टकृतात् प्रा** क्**विविधसूक्तपाठजपः कार्यः** । तानि च सूक्तानि–श्रीसूक्तं, रुद्राध्यायं आयुष्य-मंत्रान् जपेत् । ते च ऋक्-द्वयं एष वां देवा परावतो सतदशर्चं, आ नो भद्रा दशर्चं, इति वा इति, आयुष्यमिति च सूक्तं पठेत् । ततः वेदपारायणं कार्यं तदसंभवे पुरुषसूक्तं अग्निमीळे इति नवर्चं सूक्तं च पठेत् । ततः स्विष्टकृतादि प्रायश्चित्तहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावादिहोमशेषं समाप्य,

# अथ रौद्री शान्तिः ।

[ **पञ्चाशीतितमे वर्षे (८५) प्राप्ते क्रियमाणा ।** ]

अथ कर्ता यजमानः जन्मनः सकाशात् **पञ्चाशीति तमेवर्षे प्राप्ते,** जन्मदिने, जन्मनक्षत्रे, चंद्रानुकूल्ये शुभेऽहनि वा कृताभ्यंगः, कृतनित्यक्रियः, कृताग्निसिद्धिः, शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः, प्राणानायम्य, पंचगव्य-प्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः, देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य, श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मनः सकाशात् **पञ्चाशीतितमे वर्षे** प्राप्ते सूचित – संभाव्यमान – नानाविधरोग – दृष्टिमान्द्य–छायावैकृत्य–भार्यापुत्रादिवियोग–धनधान्यपशुक्षयादि–अरिष्ट–निरसनार्थं जन्मराशिजन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित–आदित्यादि–नवग्रहाणां उत्पन्नोत्पत्स्यमान-पीडापरिहारपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना यथा–संभृत-संभारैः यथाशक्ति यथाज्ञानतः सग्रहमखां **शौनकोक्तां रौद्री शान्तिं करिष्ये ।** तदंगं स्वस्ति-पुण्याहवाचनं, मातृकापूजनं, नांदीश्राद्धं, आचार्यवरणं च करिष्ये । तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं च करिष्ये, इति संकल्प्य, तानि कृत्वा, वृताचार्यः, स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित – **रौद्रीशान्ति** – कर्मणि वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये। तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त–जप–पूर्वकम् भू–शुद्ध्यादि करिष्ये । आदौ निर्विघ्नार्थं महागणपति–स्मरणं च करिष्ये । इत्यादि गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन सर्वतोभद्रस्य (लिंगतोभद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि-मंडल-देवताः आवाह्य, संपूज्य तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवतास्थापनमिच्छन्ति ।) सवस्त्रपीठासने तण्डुलराश्युपरि महीद्यौरित्यादिना कलशं प्रतिष्ठाप्य, वरुणप्रार्थनान्तं कृत्वा, पूर्णपात्रे अष्टदलमध्ये कर्णिकायां कृताग्न्युत्तारणपूर्विकायां सुवर्णप्रतिमायां–**मृत्युंजयं रुद्रदेवतां मानस्तोकेति मंत्रेण मृत्युंजयं रुद्रं प्रधानदेवं आवाहयेत् । तद्यथा–मानस्तोकेति कुत्सो मृत्युंजय-रुद्रो जगती मृत्युंजयरुद्रावाहने विनियोगः ।**



**ॐ मा नस्तोके तनये मा नऽआयौ**
**मा नो गोषु मा नोऽअश्वेषु रीरिषः ।**
**वीरान्मा नो रुद्र भामितो वधी–**
**र्हविष्मन्तः सदमित्त्वा हवामहे ।**

(अ-१, अ-८, वर्ग-६)

(यजमानः तैत्तिरीयशाखीयश्चेत् तत्स्थो मंत्रो वा ग्राह्यः ।)

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां मृत्युंजयं रुद्रं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि । ॐ भूः मृत्युंजयं रुद्रं आवा० । ॐ भुवः मृत्युंजयं रुद्रं आवा० । ॐ स्वः मृत्युंजयं रुद्रं आवा० । ॐ भूर्भुवः स्वः मृत्युंजयं रुद्रं आवा० । तदुत्तरतः त्र्यंबकेति मंत्रेण **त्र्यंबकं** आवाह्य, तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् संपूज्य, प्रधानदेवतासमीपे तन्मंत्रं अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थण्डिलान्तिकमेत्य, अद्येत्यादि० संकल्पित-रौद्री-शांतिकर्मणि स्थंडिलादिसकलं कर्म करिष्ये । वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादिनवग्रहानावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा, स्थंडिलसमीपमेत्य, समिद्द्वयेत्यन्वादध्यात् । चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात् । **अत्र प्रधानदेवतां मृत्युंजयं रुद्रं तन्मंत्रेण समिध्-आज्य-चरु-पायस-द्रव्यैः चतुर्भिः प्रतिद्रव्यं (अष्टोत्तरसहस्र) अष्टोत्तर-शत-संख्याकाभिराहुतिभिर्वा, मृत्युंजयं त्र्यंबकं त्र्यंबकेतिमंत्रेण घृताक्ततिलद्रव्येण सहस्रसंख्याकाहुतिभिः, नक्षत्र-देवतां नाममंत्रेण अष्टाविंशति-अष्टसंख्याका-भिराज्यद्रव्येण यक्ष्ये।** शेषेण स्विष्टकृतमिति चक्षुष्यन्तं कर्म कृत्वा यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय, **स्विष्टकृतात्** प्राक् **विविधसूक्त-पाठजपः कार्यः ।** तानि च सूक्तानि–श्रीसूक्तं, रुद्राध्यायं, आयुष्य-मंत्रान् जपेत् । ते च ऋक्द्वयं एष वां देवा, परावतो सप्तदशर्चं, आ नो भद्रा दशर्चं, इति वा इति, आयुष्यमिति च सूक्तं पठेत् । ततः वेदपारायणं कार्यम् । तदसंभवे पुरुषसूक्तं अग्निमीळे इति **नवर्चं सूक्तं च** पठेत् । ततः स्विष्टकृतादि प्रायश्चित-होमान्ते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावादिहोमशेषं समाप्य, स्थापितकलशोदकै सकुटुंबं बंधुवर्गयुतं यजमानं अभिषिंचेत् । तत्र अभिषेकमंत्राः–समुद्रज्येष्ठा० शं न इंद्राग्नी० परं मृत्यो०

एष वां देवा ऋग्द्वयं परावतो सप्तदशर्चं, स्वादिष्टयेति दशर्चं, अक्षिभ्यां षट्भिः, यज्जाग्रत इति षण्णाम्। ग्रहमंत्र-मुख्यदेवतामंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात्। विभूतिं धृत्वा आ नो भद्रा इति महाशांतिजपपूर्वकं देवतोत्तरपूजने कृते, मार्कण्डेयादीन् प्रार्थयेत। ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत्। तत्र मंत्रः '**सतिलं गुडसंमिश्रं अंजल्यर्धमितं पयः। मार्कंडेयात् वरं लब्ध्वा पिबाम्यायुर्विवृद्धये**। इति पिबेत्। ततः कांस्यपात्रे घृतमासिच्य, तत्र 'रूपं रूपं' इति मंत्रेण आज्यावलोकनं कृत्वा, तत्पात्रं सदक्षिणाकं ब्राह्मणाय दत्त्वा, गो-भू-तिल-हिरण्यादि दशदानानि, कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा, सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यः दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः। तिलपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे॥' इति। पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यः दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात्। द्विराचम्य, त्रिवारं विष्णुस्मरणं कुर्यात् इति।

**॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी-विरचिता रौद्री-शान्तिः समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



# अथ कालस्वरूप-सौरी-शान्तेः प्रयोगदर्शनम्।

* * * * * * * * * * * * * * * * * *

प्रधानदेवता : : कालस्वरूपसूर्यः।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : तच्चक्षुर्देवहितम्।
हवनीयद्रव्यं : : समिद्-आज्य-चरु-पायसानि।
हवनसंख्या : : १००८ वा १०८ वा यथाशक्ति।
उपदेवता : : मृत्युंजयत्र्यंबकः।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : त्र्यंबकं यजामहे।
हवनीयद्रव्यं : : घृताक्ततिलाः।
हवनसंख्या : : १००८ वा १०८ वा यथाशक्ति।
नक्षत्रदेवता : : यजमानस्य जन्मनक्षत्रं तद् देवता।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : नाममंत्रः।
हवनीयद्रव्यं : : आज्यम्।
हवनसंख्या : : २८ वा ८ वा यथाशक्ति।

सर्वशान्तीनां संकल्पस्वरूपं एकमेव। केवलं वयःसंख्याभेदः। सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत्। अनन्तरम् स्विष्टकृतादि-प्रायश्चित्तहोमान्ते बलिदानम् पूर्णाहुतिं संस्रावादिहोमशेषं समाप्य कलशोदकैः यजमानं अभिषिंचेत्। नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत। देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम्, शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः। यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः। त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति। अयम् उत्तरांगविधिः सर्वत्र समानः।

## अथ कालस्वरूप–सौरी शान्तिः ।

[**नवतितमे वर्षे (९०) प्राप्ते क्रियमाणा ।**]

अथ कर्ता यजमानः जन्मनः सकाशात् **नवतितमवर्षे** प्राप्ते, जन्मदिने, जन्मनक्षत्रे, चन्द्रानुकूल्ये शुभेऽहनि वा, कृताभ्यंगः, कृतनित्यक्रियः, कृताग्निसिद्धिः, शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः प्राणानायम्य, पंचगव्यप्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः, देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य, श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मनः सकाशात् **नवतितम**–वर्षे प्राप्ते सूचित–संभाव्यमान–नानाविधरोग–दृष्टिमान्द्य – छायावैकृत्य – भार्यापुत्रादिवियोग–धनधान्यपशुक्षयादि–अरिष्ट–निरसनार्थं जन्मराशिजन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित–आदित्यादि–नवग्रहाणां उत्पन्नोत्पत्स्यमान–पीडापरिहारपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना यथासंभृतसंभारैः यथाशक्ति यथाज्ञानतः सग्रहमखां **शौनकोक्तां कालस्वरूप-सौरीं शान्तिं करिष्ये** । तदंगं स्वस्ति-पुण्याहवाचनं, मातृकापूजनं, नांदीश्राद्धं आचार्य वरणं च करिष्ये । तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं करिष्ये । इति संकल्प्य, तानि कृत्वा वृताचार्यः स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित-**कालस्वरूप-सौरी शान्तिकर्मणि** वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये। तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त–जप–पूर्वकम् भू–शुद्ध्यादि करिष्ये, आदौ निर्विघ्नार्थं महागणपति–स्मरणं च करिष्ये इत्यादि । गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन सर्वतोभद्रस्य (लिंगतोभद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि–मंडल–देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवतास्थापनमिच्छन्ति ।) महीद्यौरित्यादिना कलशं संस्थाप्य, पूर्णपात्रे, अष्टदले कर्णिकायां कृताग्न्युत्तारणपूर्विकायां सुवर्णप्रतिमायां तच्चक्षुर्देवहितं मंत्रेण कालस्वरूपं सूर्यं प्रतिष्ठाप्य, तद्यथा–**तच्चक्षुरित्यस्य मैत्रावरुणिर्वसिष्ठः कालस्वरूपः सूर्यः पुर उष्णिक् कालस्वरूपसूर्यावाहने विनियोगः ।**

**ॐ तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।**
**पश्येम शरदः शतं**
**जीवेम शरदः शतम् ॥**
(अ–५, अ–५, वर्ग–११)

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां कालस्वरूपसूर्यं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि । ॐ भूः कालस्वरूपसूर्यं आवा० । ॐ भुवः कालस्वरूपसूर्यं आवा० । ॐ स्वः कालस्वरूपसूर्यं आवा० । ॐ भूर्भुवः स्वः कालस्वरूपसूर्यं आवा० । तदुत्तरतः त्र्यंबकेति मंत्रेण **त्र्यंबकं** आवाह्य, तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् संपूज्य, अभिषेकसमये सौरसूक्तमंत्रान् पठेत् । प्रधानदेवतासमीपे तन्मंत्रं (तच्चक्षुर्देवहितं०) अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थंडिलान्तिकमेत्य, अद्येत्यादि० संकल्पित-कालस्वरूप–सौरी–शान्तिकर्मणि स्थंडिलादिसकलं कर्म करिष्ये । वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादिनवग्रहानावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा स्थंडिलसमीपमेत्य समिद्द्रव्येत्यन्वादध्यात् । चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात् । **अत्र प्रधानं देवं कालस्वरूपं सूर्यं, तच्चक्षुरिति–मंत्रेण समिध्–आज्य–चरु–पायस–द्रव्यैः चतुर्भिः प्रतिद्रव्यं अष्टोत्तरसहस्र अष्टोत्तरशतसंख्याकाभिराहुतिभिर्वा, मृत्युंजय–त्र्यंबकं घृताक्ततिलद्रव्येण सहस्रसंख्याकाहुतिभिः नक्षत्रदेवतां नाममंत्रेण अष्टाविंशति–अष्टसंख्याकाभिर्वाज्यद्रव्येण यक्ष्ये** । शेषेण स्विष्टकृतमिति चक्षुष्यन्तं कर्म कृत्वा यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय **स्विष्टकृतात्** प्राक् **विविधसूक्तपाठजपः कार्यः** । तानि च सूक्तानि, श्रीसूक्तं, रुद्राध्यायं, आयुष्यमंत्रान् जपेत् । ते च ऋक्द्वयं एष वां देवा परावतो सप्तदशर्चं, आ नो भद्रा दशर्चं, इति वा इति आयुष्यमिति च सूक्तं पठेत् । ततः जप्त्वा वेदपारायणं कार्यम् । तदसंभवे पुरुषसूक्तं अग्निमीळे इति नवर्चं सूक्तं च पठेत् । ततः स्विष्टकृतादि–प्रायश्चित्तहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा, संस्रावादिहोमशेषं समाप्य, स्थापित-कलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानं अभिषिंचेत् । तत्र अभिषेकमंत्राः–

समुद्रज्येष्ठा० शं न इंद्राग्नी० परं मृत्यो० एष वां देवा ऋग्द्वयं० परावतो सप्तदशर्चं, स्वादिष्टयेति दशर्चं, अक्षिभ्यां षट्भिः, यज्जाग्रत इति षण्णाम्। ग्रहमंत्रमुख्यदेवता-मंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात्। विभूतिं धृत्वा आ नो भद्रा इति महाशांतिजपपूर्वकं देवतोत्तरपूजने कृते, मार्कंडेयादीन् प्रार्थयेत। ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत्। तत्र मंत्रः '**सतिलं गुडसंमिश्रं अंजल्यर्धमितं पयः। मार्कंडेयात् वरं लब्ध्वा पिबाम्यायुर्विवृद्धये**। इति पिबेत्। ततः कांस्यपात्रे घृतमासिच्य, तत्र '**रूपं रूपं**' इति मंत्रेण आज्यावलोकनं कृत्वा, तत्पात्रं सदक्षिणाकं ब्राह्मणाय दत्त्वा, गो-भू-तिल-हिरण्यादि दशदानानि कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यः दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः। तिलपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे॥' इति। पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यः दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात्। द्विराचम्य, त्रिवारं विष्णुस्मरणं कुर्यात् इति।

**॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी-विरचिता कालस्वरूप-सौरी-शान्तिः समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



# अथ त्रैयंबक-मृत्युंजय-शान्तेः प्रयोगदर्शनम्।

* * * * * * * * * * * * * * * * *

प्रधानदेवता : : मृत्युंजयरुद्रः।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : ॐ पूर्वकव्याहृति-संपुटितं त्र्यंबकं०।
हवनीयद्रव्यं : : समिध्-आज्य-चरु-पायसानि।
हवनसंख्या : : १००८ वा १०८ वा यथाशक्ति।
नक्षत्रदेवता : : यजमानस्य जन्मनक्षत्रं तद् देवता।
प्रतिष्ठा-पूजन-हवन-मंत्रः : : नाममंत्रः।
हवनीयद्रव्यं : : आज्यम्।
हवनसंख्या : : २८ वा ८ वा यथाशक्ति।

सर्वशान्तीनां संकल्पस्वरूपं एकमेव। केवलं वयःसंख्याभेदः। सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत्। अनन्तरम् स्विष्टकृतादि-प्रायश्चित्तहोमान्ते बलिदानम्, पूर्णाहुतिं, संस्रावादिहोमशेषं समाप्य कलशोदकैः यजमानं अभिषिंचेत्। नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत। देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम्, शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः। यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः। त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति। अयम् उत्तरांगविधिः सर्वत्र समानः।

# अथ त्रैयंबक मृत्युंजय–शान्तिः

**[पञ्चनवतितमे वर्षे (९५) प्राप्ते क्रियमाणा।]**

(अथ कर्ता यजमानः शक्तः इंद्रियादिबलसम्पन्नश्चेत् स्वयं, **नो चेत् पुत्राचार्यादिप्रतिनिधिद्वारा इयं शान्तिः कार्या। कर्ता पुत्रश्चेत्–'मम पितुः** जन्मनः० कर्ता आचार्यश्चेत्–०अमुकगोत्रोत्पन्नस्य अमुकशर्मणः **यजमानस्य** जन्मनः०)।

अथ कर्ता यजमानः जन्मनः सकाशात् **पञ्चनवतितमे वर्षे प्राप्ते**, जन्मदिने, जन्मनक्षत्रे चन्द्रानुकूल्ये शुभेऽहनि वा, कृताभ्यंगः, कृतनित्यक्रियः, कृताग्निसिद्धिः, शुभे सवस्त्रपीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः, प्राणानायम्य, पंचगव्य-प्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः देवतागुर्वादींश्चाभिवाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम जन्मनः सकाशात् **पञ्चनवतितमे वर्षे प्राप्ते** सूचित–संभाव्यमान–नानाविधरोग–दृष्टिमान्द्य–छायावैकृत्य–भार्यापुत्रादि-वियोग–धनधान्य–पशुक्षयादि–विविध–अरिष्ट–निरसनार्थं जन्मराशि–जन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित–आदित्यादि–नवग्रहाणां उत्पन्नोत्पत्स्यमान-पीडापरिहारपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्तमंगलप्राप्त्यर्थं देशकालाद्य-नुसारतः विद्वदुपदिष्टेन विधिना यथाशक्तिसंभृतसंभारैः यथाज्ञानतः। (पुत्रश्चेत्) पितुराज्ञया (आचार्यश्चेत्) यजमानानुज्ञया सग्रहमखां **त्रैयंबक–मृत्युंजय–शान्तिं करिष्ये।** तदंगं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं आचार्यवरणं च करिष्ये। तत्रादौ निर्विघ्नता–सिद्ध्यर्थं महागणपतिपूजनं करिष्ये इति संकल्प्य, तानि कृत्वा, वृताचार्यः स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वरप्रीत्यर्थं अमुक-गोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित–**त्रैयंबक–मृत्युंजय–शान्ति**–कर्मणि वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये। तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त–जप–पूर्वकम् भू–शुद्ध्यादि करिष्ये। आदौ निर्विघ्नार्थं महागणपति–स्मरणं च करिष्ये। इत्यादि गौरसर्षपविकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन–सर्वतोभद्रस्य (लिंगतो-भद्रस्य वा) सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र ब्रह्मादि–मंडल–देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवतास्थापनमिच्छन्ति।) सवस्त्रपीठासने तण्डुलराश्युपरि महीद्यौरित्यादिना कलशं प्रतिष्ठाप्य, वरुणप्रार्थनान्तं कृत्वा, पूर्णपात्रे अष्टदलमध्ये कर्णिकायां कृताग्न्युत्तारण-पूर्विकायां सुवर्णप्रतिमायां ॐ भूर्भुवः स्वः—**व्याहृति–संपुटित–त्रैयंबकमंत्रेण त्र्यंबक–मृत्युंजय–रुद्र–देवतामावाहयेत्। तद्यथा त्र्यंबको मैत्रावरुणिर्वसिष्ठो मृत्युंजयरुद्रस्त्रिष्टुप्। मृत्युंजयरुद्रावाहने विनियोगः। आवाहनमंत्रस्वरूपं** तारव्याहृतिसंपुटितम्।

**ॐ भूर्भुवः स्वः**

**ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम्।**

**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥**

**ॐ स्वः भुवः भूः ॐ** (अ. ५, अ. ४, वर्ग–३०)

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां मृत्युंजयाय रुद्राय नमः। मृत्युंजयं रुद्रं साङ्गं सपरिवारं सायुधं सशक्तिकं आवाहयामि। ॐ भूः मृत्युंजयं रुद्रं आवा०। ॐ भुवः मृत्युंजयं रुद्रं आवा०। ॐ स्वः मृत्युंजयं रुद्रं आवा०। ॐ भूः भुवः स्वः मृत्युंजयं रुद्रं आवा०। उक्तरीत्या मंत्रपाठेन षोडशोपचारैः पूजां कुर्यात्। जपोऽप्येवम्। हवनसमये मन्त्रपाठः एवं–ॐ भूर्भुवः स्वः। ॐ त्र्यंबकं यजामहे.... मामृतात्। ॐ स्वः भुवः भूः ॐ स्वाहा। एवंरीत्या मंत्रपाठेन हवनम् कार्यम्। तदुत्तरतः **नक्षत्रदेवतां** नाममंत्रेणावाह्य, काण्डानुसमयेन पदार्थानुसमयेन वा सर्वान् व्याहृतिसंपुटित–त्र्यंबकमंत्रेण षोडशोपचारैः पूजयेत्। प्रधानदेवतासमीपे तन्मंत्र (ॐ पूर्वकव्याहृतिसंपुटित त्र्यंबक०) अष्टोत्तरशतं अष्टाविंशतिवारं वा जप्त्वा, स्थंडिलान्तिकमेत्य, अद्येत्यादि० संकल्पित–मृत्युंजय–महारथीशांतिकर्मणि स्थंडिलादि-सकलं कर्म करिष्ये। वरदनामानमग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां आदित्यादिनवग्रहानावाह्य, संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा स्थंडिलसमीपमेत्य समिद्द्वयेत्यन्वादध्यात्। चक्षुष्यन्तं उक्त्वा ग्रहानन्वादध्यात्। **अत्र प्रधानं देवं मृत्युंजयं रुद्रं, ॐ पूर्वक–व्याहृति–संपुटितं त्र्यंबकं०–मंत्रेण समिध्–आज्य–चरु–पायस–द्रव्यैः चतुर्भिः प्रतिद्रव्यं (अष्टोत्तरसहस्र) अष्टोत्तर-शतसंख्याकाभिराहुतिभिर्वा, नक्षत्रदेवतां नाममंत्रेण अष्टाविंशति–अष्ट-संख्याकाभिर्वाज्यद्रव्येण यक्ष्ये।** शेषेण स्विष्टकृतमिति चक्षुष्यन्तं कर्म कृत्वा

यजमानेन द्रव्यत्यागे कृते, ग्रहहोमं प्रधानादिहोमं विधाय **स्विष्टकृतात्** प्राक् **विविधसूक्तपाठजपः कार्यः**। तानि च सूक्तानि–श्रीसूक्तं, रुद्राध्यायं, आयुष्य-मंत्रान् जपेत्। ते च ऋक्द्वयं एष वां देवा परावतो सप्तदशर्चं, आ नो भद्रा दशर्चं, इति वा इति आयुष्यमिति च सूक्तं पठेत्। ततः जप्त्वा वेदपारायणं कार्यम्; तदसंभवे पुरुषसूक्तं अग्निमीळे इति नवर्चं सूक्तं च पठेत्। ततः स्विष्टकृतादि-प्रायश्चितहोमान्ते बलिदानं पूर्णाहुतिं च कृत्वा, संस्रावादिहोमशेषं समाप्य, स्थापितकलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानं अभिषिंचेत्। तत्र अभिषेकमंत्राः–समुद्रज्येष्ठा० शं न इंद्राग्नी० परं मृत्यो० एष वां देवा इति ऋग्द्वयं० परावतो सप्तदशर्चं, स्वादिष्टयेति दशर्चं, अक्षिभ्यां षट्भिः, यज्जाग्रत इति षण्णाम्। ग्रहमंत्रमुख्यदेवतामंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात्। विभूतिं धृत्वा आ नो भद्रा इति महाशांतिपूर्वकं देवतोत्तरपूजने कृते, मार्कंडेयादीन् प्रार्थयेत। ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत्। तत्र मंत्रः '**सतिलं गुडसंमिश्रं अंजल्यर्धमित पयः। मार्कंडेयात् वरं लब्ध्वा पिबाम्यायुर्विवृद्धये**। इति पिबेत्। ततः कांस्यपात्रे घृतमासिच्य, तत्र '**रूपं-रूपं**' इति मंत्रेण आज्यावलोकनं कृत्वा तत्पात्रं सदक्षिणाकं ब्राह्मणाय दत्त्वा, गो–भू–तिल-हिरण्यादि दशदानानि कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा, सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यः दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः। तिलपात्र-प्रदानेन अतः शान्तिं प्रयच्छ मे ॥' इति। पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य, पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यः दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात्। द्विराचम्य त्रिवारं विष्णुस्मरणं कुर्यात् इति।

**॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी–विरचिता**
**मृत्युंजय-रुद्र-शान्तिः समाप्ता।**

**॥ श्रीकृष्णार्पणमस्तु ॥**



# अथ महामृत्युंजय–शान्तेः प्रयोगदर्शनम्।

* * * * * * * * * * * * * * * *

| | |
|---|---|
| प्रधानदेवता : | : महामृत्युंजयः। |
| प्रतिष्ठा पूजन-हवन-मंत्रः : | : तार त्रिबीजव्याहृतिसंपुटितत्र्यंबक० । |
| हवनीयद्रव्यं : | : समिद्-आज्य-चरु-पायसानि। |
| हवनसंख्या : | : १००८ वा १०८ वा यथाशक्ति। |
| परिवारदेवता : | : विश्वेश्वरादि-एकादश-रुद्राः। |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : नाममंत्रः। |
| हवनीयद्रव्यं : | : पायसम्। |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति। |
| उपदेवता : | : सूर्यः। |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : उद्वयंतमसि० । |
| हवनीयद्रव्यं : | : तिलम्। |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति। |
| नक्षत्रदेवता : | : यजमानस्य जन्मनक्षत्रं तद् देवता। |
| प्रतिष्ठा-पूजन-हवन-मंत्रः : | : नाममंत्रः। |
| हवनीयद्रव्यं : | : आज्यम्। |
| हवनसंख्या : | : २८ वा ८ वा यथाशक्ति। |

सर्वशांतीनां संकल्पस्वरूपं एकमेव। केवलं जपःसंख्याभेदः। सर्वासु शान्तिषु हवनसमाप्तौ स्विष्टकृतात् पूर्वं विविधसूक्तानि यजमानाय श्रावयेत्। अनन्तरम् स्विष्ट-कृतादि–प्रायश्चित्तहोमान्ते बलिदानम् पूर्णाहुतिं संस्रावादिहोमशेषं समाप्य कलशोदकैः यजमानं अभिषिंचेत्। नूतनवस्त्रान्ते विभूतिं धृत्वा देवतां सप्तचिरंजीवांश्च प्रार्थयेत। देवतोत्तरपूजनम्, दुग्धप्राशनम्, आज्यावलोकनम्, पीठदानम्, दशदानम्, शतगुंजासुवर्णदानम्, ब्राह्मणभोजनदक्षिणादानम् इत्यादीनां संकल्पः। यजमानं सत्कृत्य (अहेर) नीराजनविधिः, आशीर्वादः। त्रिवारं विष्णुस्मरणेन कर्मसमाप्तिं वाचयेत् इति। अयम् उत्तरांगविधिः सर्वत्र समानः।

# अथ महामृत्युंजय-शान्तिः।

[शततमे (१००)-वर्षे क्रियमाणा।]

(अथ कर्ता यजमानः शक्तः इंद्रियादिबलसम्पन्नश्चेत् स्वयं, नो चेत् पुत्राचार्यादि-प्रतिनिधिद्वारा इयं शान्तिः कार्या।)

अथ कर्ता यजमानः प्रतिनिधिद्वारा चेत्, मम पितुः जन्मनः सकाशात् **शततमे वर्षे प्राप्ते,** (कर्ता पुत्रादिश्चेत् पूर्ववत् ऊहः कार्यः।) जन्मदिने, जन्मनक्षत्रे, चन्द्रानुकूल्ये शुभेऽहनि वा, कृताभ्यंगः, कृतनित्यक्रियः, कृताग्निसिद्धिः, शुभे सवस्त्र पीठासने उपविश्य, यज्ञोपवीती, आचम्य, पवित्रपाणिः प्राणानायम्य, पंचगव्य-प्राशनादिना शरीरशुद्धिं विधाय, सुवासिन्या कृतमंगलतिलकः, देवतागुर्वादींश्चाभि-वाद्य, ब्राह्मणैर्दत्तानुज्ञः स्वासने उपविश्य, पुनः आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रः अमुकशर्माऽहं मम पितुः (प्रतिनिधिश्चेत्) जन्मनः सकाशात् **शततमे वर्षे प्राप्ते** सूचित-संभाव्यमान-नानाविधरोग-दृष्टिमान्द्य-छायावैकृत्य-भार्यापुत्रादिवियोग-धनधान्यपशुक्षयादि-अरिष्ट-निरसनार्थं जन्मराशि-जन्मलग्नाभ्यां सकाशात् गोचरेण अनिष्टस्थानस्थित—आदित्यादि—नवग्रहाणां उत्पन्नोत्पत्स्यमान—पीडापरिहारपूर्वकं सर्वसुखावाप्तिधनधान्याद्यभिवृद्ध्यर्थं समस्त-मंगलप्राप्त्यर्थं देशकालाद्यनुसारतः विद्वदुपदिष्टेन विधिना (कर्ता पुत्रश्चेत् पितुराज्ञया, आचार्यश्चेत् अमुकगोत्रोत्पन्नस्य अमुकशर्मणः यजमानस्य आज्ञया संकल्पोक्त-फलप्राप्तये) यथासंभृतसंभारैः यथाशक्ति यथाज्ञानतः सग्रहमखां **शौनकोक्तां महामृत्युंजयशान्तिं करिष्ये।** तदंगं स्वस्ति-पुण्याहवाचनं, मातृकापूजनं, नांदीश्राद्धं आचार्यवरणं च करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं करिष्ये। इति संकल्प्य, तानि कृत्वा वृताचार्यः स्थंडिलसमीपमुपविश्य, आचम्येत्यादि० श्रीपरमेश्वर-प्रीत्यर्थं अमुकगोत्रोत्पन्नेन अमुकशर्मणा यजमानेन संकल्पित-**महामृत्युंजय-शान्तिकर्मणि** वृतोऽहं यथाज्ञानतः देशकालाद्यनुसारेण एभिर्ब्राह्मणैः सह आचार्यकर्म करिष्ये। तदंगं शरीरशुद्ध्यर्थं पुरुषसूक्त-जप-पूर्वकम् भू-शुद्ध्यादि करिष्ये, आदौ निर्विघ्नार्थं महागणपति-स्मरणं च करिष्ये इत्यादि। गौरसर्षप-विकिरणादि प्रादेशान्तं कर्म कृत्वा, स्थण्डिलात् पूर्वभागे वेदीं प्रकल्प्य, (अत्र केचन सर्वतोभद्रस्य लिंगतोभद्रस्य वा सर्वसाधारणत्वात् पीठे सर्वतोभद्रं विरच्य, तत्र



ब्रह्मादि-मंडल-देवताः आवाह्य, संपूज्य, तण्डुलैराच्छाद्य, तदुपरि कलशं संस्थाप्य, वरुणं संपूज्य, कर्णिकायां देवतास्थापनमिच्छन्ति,) अष्टदले कर्णिकायां कृताग्न्युत्ता-रणपूर्विकायां सुवर्णप्रतिमायां तार-त्रिबीज-व्याहृति-संपुटित-त्रैयंबक-मंत्रेण महामृत्युंजयदेवतां स्थापयेत् (तारशब्दस्यार्थः ओंकारः) तद्यथा, त्र्यंबकं मैत्रावरुणिर्वसिष्ठो महामृत्युंजयस्त्रिष्टुप्। अस्यां सुवर्णमय्यां मूर्तौ महामृत्युंजयावाहने विनियोगः।

**ॐ ह्रौं जूं सः ॐ भूर्भुवः स्वः।**
**ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनं**
**उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात्॥**
**ॐ स्वः भुवः भूः ॐ सः जूं ह्रौं ॐ**

**(अ-५, अ-४, वर्ग-३०)**

अस्यां सुवर्णमय्यां मूर्तौ प्रधानदेवतां महामृत्युंजयं सांगं सपरिवारं सायुधं सशक्तिकं आवाहयामि। ॐ भूः महामृत्युंजयं आवा०। ॐ भुवः महामृत्युंजयं आवा०। ॐ स्वः महामृत्युंजयं आवा०। ॐ भूर्भुवःस्वः महामृत्युंजयं आवा०। इति आवाह्य। परितः पूर्वादिक्रमेण पूगीफले विश्वेश्वरादैकादशरुद्रावाहनं कुर्यात्-तथा-ॐ विश्वेश्वराय नमः विश्वेश्वरमावाहयामि। ॐ महादेवाय नमः। ॐ महादेवं आवाहयामि। ॐ विरूपाक्षाय नमः विरूपाक्षं आवाहयामि। ॐ सदाशिवाय नमः सदाशिवं आवाहयामि। ॐ त्र्यंबकाय नमः त्र्यंबकं आवाहयामि। ॐ त्रिपुरुषाय नमः त्रिपुरुषं आवाहयामि। ॐ रुद्राय नमः रुद्रं आवाहयामि। ॐ त्रिपुरान्तकाय नमः त्रिपुरान्तकं आवाहयामि। ॐ सर्वेश्वराय नमः सर्वेश्वरं आवाहयामि। ॐ शंकराय नमः शंकरं आवाहयामि। ॐ विश्वरूपाय नमः विश्वरूपं आवाहयामि। इत्यैकादशरुद्रानावाह्य। पूजनसमये मंत्रपाठो यथापूर्वमेव। ॐ ह्रौं जूं सः० ॐ भूर्भुवः स्वः० ॐ त्र्यंबकं यजामहे० ॐ स्वः भुवः भूः ॐ सः जूं ह्रौं ॐ। महामृत्युंजयाद्यावाहितदेवताभ्यो नमः। ध्यायामि। आसनार्थे अक्षतान् समर्पयामि। एवंरीत्या षोडशोपचारैः पूजयेत्। हवनसमयेऽपि एतादृशो मंत्रपाठः करणीयः।

[illegible] ऋग्यजुर्वेदीयेन सूर्यं स्थापयेत् । उदयन्नद्येत्यस्य काण्वः प्रस्कण्वः [illegible] । सूर्योदवतो विनियोगः ।

## ॐ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥

(अ-१, अ-४, वर्ग-७)

ॐ भूर्भुवःस्वः । [illegible]पूगीफले (सुवर्णप्रतिमायां वा) सूर्याय नमः । सूर्यं [illegible]यामि ।

[illegible] [illegible] नाममंत्रेणावाह्य, एवं देवता-आवाहनोत्तरं सर्वासां [illegible] [illegible]-त्रिवीज-व्याहृति-संपुटित-त्र्यंबक-मंत्रेण ॐ महामृत्युंजयावाहित-देवताभ्यो नमः । आसनार्थे अक्षतं समर्पयामि । एवंरीत्या षोडशोपचारपूजां कुर्यात् । [illegible] [illegible] सकृत् रुद्रावर्तनम् । नमः सोमायेत्येकं वर्गं वा पठेत् । [illegible] [illegible] (२८) अष्टाविंशति वारं जपं कृत्वा उत्तिष्ठेत् । स्थंडिला-[illegible], [illegible]रि० संकल्पित-महामृत्युंजय-शांतिकर्मणि स्थंडिलादिसकलं [illegible] [illegible] । [illegible]ग्निं प्रतिष्ठाप्य, ध्यात्वा, ध्यानान्ते देवतोत्तरवेद्यां [illegible], संपूज्य, देवदानवसंवादे० इति वरुणप्रार्थनान्तं कृत्वा, [illegible], समिद्धयेत्यन्वादध्यात् । चक्षुष्यन्तं उक्त्वा प्रधानमन्वादध्यात् । [illegible] [illegible] [illegible]-त्रिवीज-व्याहृति-संपुटित-त्र्यंबकेति मृत्युंजय [illegible] [illegible]-चतुर्भिः द्रव्यैः प्रतिद्रव्यम् अष्टोत्तरसहस्र (१००८) [illegible]भिः अष्टोत्तरशताहुतिभिर्वा (१०८) विश्वेश्वरादि-[illegible] [illegible] पायसद्रव्येण अष्टाविंशति अष्टवारं वा । [illegible] [illegible] २८ अष्टाविंशतिवारं तिलद्रव्येण, [illegible]देवतां २८ [illegible] [illegible] । शेषेण स्विष्टकृतमिति चक्षुष्यन्तं [illegible] [illegible]गे कृते, ग्रहहोमं प्रधानादिहोमं विधाय, स्विष्टकृतात् [illegible] [illegible] कार्यः । तानि च सूक्तानि, श्रीसूक्तं, रुद्राध्यायं, आयुष्य-[illegible] [illegible] । [illegible] एष वो देवा, परावतो सप्तदशार्चं, आ नो भद्रा दशार्चं, [illegible] [illegible] च सूक्तं पठेत् । ततः वेदपारायणं कार्यम् । तदसंभवे [illegible] [illegible] सूक्तं च पठेत् । ततः स्विष्टकृतादि प्रायश्चित्त-होमान्ते



बलिदानं पूर्णाहुतिं च कृत्वा, संस्रावादिहोमशेषं समाप्य, स्थापितकलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानं अभिषिंचेत् । तत्र अभिषेकमंत्राः—समुद्रज्येष्ठा० शं न इंद्राग्नी० परं मृत्यो० एष वो देवा० ऋग्द्वयं, परावतो सप्तदशार्चं, स्वादिष्टयेति दशार्चं, अक्षिभ्यां षट्भिः, यजाग्रत इति षण्णाम् । ग्रहमंत्र-मुख्यदेवतामंत्रेत्यादीनां सर्वेषां अभिषेके विनियोगः ।

(अभिषेकमंत्राणां बाहुल्यात् यथावकाशं यथाशक्ति पाठः ।)

ततो यजमानः अभिषेकवस्त्रं परित्यज्य, धृतशुक्लांबरः, अभिषेकवस्त्रं आचार्याय दद्यात् । विभूतिं धृत्वा आ नो भद्रा इति महाशांतिजपपूर्वकं देवतोत्तरपूजने कृते, मार्कंडेयादीन् प्रार्थयेत । ततः आयुर्वृद्ध्यै सतिलगुडसंमिश्रं दुग्धं प्राशयेत् । तत्र मंत्रः 'सतिलं गुडसंमिश्रं अंजल्यर्धमितं पयः । मार्कंडेयात् वरं लब्ध्वा पिबाम्या-युर्विवृद्धये ।' इति पिबेत् । ततः कांस्यपात्रे घृतमासिच्य, तत्र 'रूपं रूपं' इति मंत्रेण आज्यावलोकनं कृत्वा, तत्पात्रं सदक्षिणाकं ब्राह्मणाय दत्त्वा, गो-भू-तिल-हिरण्यादि दशदानानि कानिचित् प्रत्यक्षाणि, कानिचित् निष्क्रयद्वारा, सर्वाणि वा निष्क्रयरूपेण ब्राह्मणेभ्यो दत्त्वा, तथा शतगुंजापरिमितं सुवर्णं, तन्निष्क्रयं वा विभज्य विभज्य ब्राह्मणेभ्यो दत्त्वा, अशक्तौ शतसर्षपतुलितं वा ततः विसर्जितदेवतापीठदानान्ते तिलदानं च कृत्वा, तत्र मंत्रः 'तिलाः कश्यपसंभूतास्तिलाः पापहराः शुभाः । तिलपात्रप्रदानेन अतः शान्तिं प्रयच्छ मे ॥' इति । पुत्रादिकैः पुष्पमालावस्त्रादिना यजमानं (अहेर) सत्कृत्य, पुरंध्रीभिः (सुवासिनीभिः) आचारात् यजमानस्य यावन्ति वयोवर्षाणि तावद्भिर्वा नीराजनैः (दीपैः) नीराजयित्वा, ब्राह्मणेभ्यः दक्षिणां दत्त्वा, तेभ्यः आशीर्वचनं गृहीत्वा, ब्राह्मणभोजनसंकल्पं कृत्वा, देवानभिवाद्य, कर्म परमेश्वरार्पणं कुर्यात् । द्विराचम्य, त्रिवारं विष्णुस्मरणं कुर्यात् इति ।

॥ इति प्राचीनग्रंथानुसारं नारायणशास्त्री जोशी-विरचिता महामृत्युंजय-शान्तिः समाप्ता ।

॥ श्रीकृष्णार्पणमस्तु ॥

वयोऽवस्थामाने विपद्पहलौ वीथिकथनं
कृतं धर्मग्रन्थैः समुचितविधिन्याससहितम् ।
तथाचारं कृण्वन् परमसुखमाप्नोति पुरुषः
परं श्रद्धायुक्तं यदि भवति कर्मप्रकरणम् ॥

न सर्वे मन्त्रा वा न हि सदुपचारास्तदथ वा
न पूजासामग्री न हि सकलदेवर्षिसमितिः ।
न चोपाध्यायो वा न हि च यजमानोऽपि धनिको
विना श्रद्धां किंचित् फलमिह लभेतात्मकृतितः ॥

मनो येषां शुद्धं विगतमलमेति व्रतयुतं
तथा च सश्रद्धं गतसकलसंशीतिशकलम् ।
कृता शान्तिस्तैश्च प्रकटविधिपूजादिसहिता
भवेन्नित्यं भोक्तुर्नियतिविहितं सौख्यमखिलम् ॥

शान्तिर्वयोमानगता प्रसिद्धा
सर्वोपचारैः परिपूर्णशोभा ।
विघ्नेश्वरस्यात्र कृपाप्रसादैः
भूयाद् धरण्यां यजमानवृद्ध्यै ॥

वयोऽवस्थाभिधः शान्तिसमुच्चय इतः कृतः ।
सर्वेषां शान्तिकर्तॄणां मंगलाय चिरं भवेत् ॥

**श्रीरामः ।**

---



ब्रह्मादि मंडळ देवता

१) ब्रह्मणे नमः ।
२) सोमाय नमः ।
३) ईशानाय नमः ।
४) इन्द्राय नमः ।
५) अग्नये नमः ।
६) यमाय नमः ।
७) निर्ऋतये नमः ।
८) वरुणाय नमः ।
९) वायवे नमः ।
१०) अष्टवसुभ्यो नमः ।
११) एकादशरुद्रेभ्यो नमः ।
१२) द्वादशादित्येभ्यो नमः ।
१३) अश्विभ्यां नमः ।
१४) विश्वेभ्यो देवेभ्यो नमः ।
१५) सप्तयक्षेभ्यो नमः ।
१६) सर्पेभ्यो नमः ।
१७) गंधर्वाप्सरोभ्यो नमः ।
१८) स्कंदाय नमः ।
१९) नंदीश्वराय नमः ।
२०) शूलाय नमः ।
२१) महाकालाय नमः ।
२२) दक्षाय नमः ।
२३) दुर्गायै नमः ।
२४) विष्णवे नमः ।
२५) स्वधायै नमः ।
२६) मृत्युरोगेभ्यो नमः ।
२७) गणपतये नमः ।
२८) अद्भ्यो नमः ।
२९) मरुद्भ्यो नमः ।
३०) भूम्यै नमः ।
३१) गंगादिनदीभ्यो नमः ।
३२) सप्तसागरेभ्यो नमः ।
३३) मेरवे नमः ।
३४) गदायै नमः ।
३५) त्रिशुलाय नमः ।
३६) वज्राय नमः ।
३७) शक्तये नमः ।
३८) दंडाय नमः ।
३९) खड्गाय नमः ।
४०) पाशाय नमः ।
४१) अंकुशाय नमः ।
४२) गौतमाय नमः ।
४३) भरद्वाजाय नमः ।
४४) विश्वामित्राय नमः ।
४५) कश्यपाय नमः ।
४६) जमदग्नये नमः ।
४७) वसिष्ठाय नमः ।
४८) अत्रये नमः ।
४९) अरुंधत्यै नमः ।
५०) ऐंद्रै नमः ।
५१) कौमार्यै नमः ।
५२) ब्राह्म्यै नमः ।
५३) वाराह्यै नमः ।
५४) चामुण्डायै नमः ।
५५) वैष्णव्यै नमः ।
५६) माहेश्वर्यै नमः ।
५७) वैनायक्यै नमः ।
५८) असितांगभैरवाय नमः ।
५९) रुरु भैरवाय नमः ।
६०) चंड भैरवाय नमः ।
६१) क्रोध भैरवाय नमः ।
६२) उन्मत्त भैरवाय नमः ।
६३) कपाल भैरवाय नमः ।
६४) भीषण भैरवाय नमः ।
६४) संहार भैरवाय नमः ।

# सप्तचिरंजीव–प्रार्थना–श्लोकाः ।

मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरारोग्यमैश्वर्यं देहि मे मुनिपुंगव ॥ १ ॥
द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव ।
आयुर्बलं यशो देहि अश्वत्थामन् नमोऽस्तु ते ॥ २ ॥
दैत्येन्द्रकुलसंभूत यज्ञदानक्रियारत ।
बले त्वां शरणं यामि दीर्घायुष्यं प्रयच्छ मे ॥ ३ ॥
वसिष्ठकुलसंभूत वेदशास्त्रविशारद ।
नारायणांशसंभूत वेदव्यास नमोऽस्तु ते ॥ ४ ॥
अंजनीगर्भसंभूत कपीन्द्र सचिवोत्तम ।
रामप्रिय नमस्तुभ्यं हनुमन् रक्ष मां सदा ॥ ५ ॥
विभीषण नमस्तुभ्यं रामपादाब्जपूजक ।
आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनंदन ॥ ६ ॥
द्विजेन्द्र भरताचार्य सर्वविद्याविशारद ।
शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥ ७ ॥
रेणुकेय महाभाग कार्तवीर्यकृतान्तक ।
आयुः प्रयच्छ मे राम जामदग्न्य नमोऽस्तु ते ॥ ८ ॥
इति ।

अभिषेकोत्तरं सर्वासु शान्तिषु अन्ते यजमानेन पठनीयाः सप्तचिरंजीवप्रार्थनाश्लोकाः ।



हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुता ऋषयः । श्रीर्देवता । आद्यास्तिस्रोऽनुष्टुभः । चतुर्थी बृहती पंचमीषष्ठ्यौ त्रिष्टुभौ । ततोऽष्टावनुष्टुभः । अंत्या प्रस्तारपंक्तिः ।

हरिः ॐ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहम् ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् ॥ तांपद्मिनीमींशरणमहंप्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ १ ॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीः ॥ उपैतुमांदेवसखःकीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ मनसःकाममाकूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्म

मालिनीम् ॥ आपः स्रजंतु स्निग्धानि चिक्लीत वस मे गृहे ॥ निचदेवीं मातरं श्रियं वासय मे कुले ॥ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विंदेयं पुरुषानहम् ॥ ३ ॥ अ० ४ अ० ४ परि०

रुद्राध्यायः न अत्र मुद्रितः सर्वेषां परिचितत्वात् ।
तस्मात् नमकश्चमकेति रुद्राध्यायः अत्र पठनीयः ॥
अथ वा नमः सोमाय० शं चमेति वर्गद्वयं पठेत् ।

एष वां देवाविति द्वयोर्वामदेवाश्विनौ गायत्री ।

हरिः ॐ एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥ तं युवं देवावश्विना कुमारं साहदेव्यं । दीर्घायुषं कृणोतन ॥ १६ ॥ अ० ३ अ० ५ वर्ग १६

परावतो य इति सप्तदशर्चस्य सूक्तस्य गयो विश्वेदेवा जगत्यन्त्ये त्रिष्टुभौ ।

हरिः ॐ परावतो ये दिधिषंत ऽआप्यं मनुप्रीतासो जनिमा विवस्वतः । ययातेर्ये नहुष्यस्य बर्हिषि देवाऽआसते ते ऽअधि ब्रुवंतु नः ॥ विश्वा हि वो नमस्यानि वंद्या नामानि देवाऽउत यज्ञियानि वः । ये स्थ जाताऽअदितेरद्भ्यस्परि ये पृथिव्या स्ते म ऽइह श्रुता हवं ॥ येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः । उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँऽआदित्याँऽअनु मदा स्वस्तये ॥ नृचक्षसोऽअनिमिषंतोऽअर्हणा बृहद्देवासोऽअमृतत्वमानशुः । ज्योतीरथाऽअहिमायाऽअनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयं । ताँऽआविवासनमसा सुवृक्तिभिर्महोऽआदित्याँऽअदितिं स्वस्तये ॥ ३ ॥

को वस्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन । को वोऽध्वरं तुविजाताऽअरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः । तऽआदित्याऽअभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ यऽईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मंतवः । ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥ भरेष्विंद्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्यं जनं । अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥ सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिं । दैवीं नावं स्वरित्रामनागसमस्रवंतीमारुहेमा स्वस्तये ॥ ४ ॥

विश्वे यजत्राऽअधि वोचतोतये त्रायध्वं नो दुरेवाया ऽअभिह्रुतः । सत्यया वो देवहूत्या हुवेम शृण्वतो देवाऽअवसे स्वस्तये ॥ अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रा

मघायतः । आरेदेवाद्वेषोऽअस्मद्युयोतनोरुणःशर्मयच्छता स्वस्तये ॥ अरिष्टःसमर्तोविश्वऽएधतेप्रप्रजाभिर्जायते धर्मणस्परि । यमादित्यासोनयथासुनीतिभिरतिविश्वानि दुरितास्वस्तये ॥ यंदेवासोवथवाजसातौयंशूरसातामरुतो हितेधने । प्रातर्यावाणंरथमिंद्रसानसिमरिष्यंतमारुहेमा स्वस्तये ॥ स्वस्तिनःपथ्यासुधन्वसुस्वस्त्यं१प्सुवृजने स्वर्वति । स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतो दधातन ॥ स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावा ममेति । सानोऽअमासोऽअरणेनिपातुस्वावेशाभवतुदेव गोपा ॥ एवाप्लुतेःसूनुरवीवृधद्वोविश्वऽआदित्याऽअदितेम नीषी । ईशानासोनरोऽअमर्त्येनास्ताविजनोदिव्यो गयेन ॥ ५ ॥ अ० ८ अ० २ वर्ग ३-४-५

आ नो भद्रा इति दशर्चस्य सूक्तस्य गोतमो राहुगणो विश्वेदेवा जगती षष्ठी विराट्-स्थाना अंत्यास्तिस्त्रस्त्रिष्टुभः ।

हरि: ॐ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरी तासउद्भिदः ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षि तारोदिवेदिवे ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिर भिनोनिवर्तताम् ॥ देवानांसख्यमुपसेदिमावयंदेवानआयुः प्रतिरंतुजीवसे ॥ तान्पूर्वयानिविदाहूमहेवयंभगंमित्र मदितिंदक्षमस्त्रिधं । अर्यमणंवरुणंसोममश्विनासरस्व



तीनःसुभगामयस्करत् ॥ तन्नोवातोमयोभुवातुभेषजं तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयो भुवस्तदश्विनाशृणुतंधिषण्यायुवं ॥ तमीशानंजगतस्तस्थु षस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसाम सद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ १ ॥ स्वस्तिनइंद्रोवृद्ध श्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्ट नेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ पृषदश्वामरुतःपृश्नि मातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवां संस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ शतमिन्नुशरदोअंति देवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंति मानोमध्यारीरिषतायुर्गंतोः ॥ अदितिर्द्यौरदितिरंतरिक्षम दितिर्मातासपितासपुत्रः ॥ विश्वेदेवाअदितिःपंचजना अदितिर्जातमदितिर्जनित्वं ॥ २ ॥ अ० १ अ० ६ वर्ग १५-१६

इति वा इति त्रयो दशर्चस्य सूक्तस्य ऐंद्रो लव आत्मा स्तुतिर्गायत्री ।

हरिः ॐ इतिवाइतिमेमनोगामश्वंसनुयामिति ॥ कुवित्सोमस्यापामिति ॥ प्रवाताइवदोधतउन्मापीताऽ अयंसत ॥ कुवित्सोमस्यापामिति ॥ उन्मापीताअयंसत रथमश्वाइवाशवः ॥ कुवित्सोमस्यापामिति ॥ उपमा

मतिरेस्थितवाश्रापुत्रमिवप्रियं ॥ कुवित्सोमस्यापामिति ॥ अहंतष्टेववंधुरंपर्यचामिहृदामतिं ॥ कुवित्सोमस्यापामिति ॥ नहिमेऽअक्षिपच्चनाच्छान्त्सुःपंचकृष्टयः ॥ कुवित्सोमस्यापामिति ॥१॥ नहिमेरोदसीउभेऽअन्यंपक्षंचनप्रति ॥ कुवित्सोमस्यापामिति ॥ अभिद्यांमहिनाभुवमभीऽमां पृथिवींमहीं ॥ कुवित्सोमस्यापामिति ॥ हंताहंपृथिवीमिमांनिदधानीहवेहवा ॥ कुवित्सोमस्यापामिति ॥ ओषमित्पृथिवीमहंजंघनानीहवेहवा ॥ कुवित्सोमस्यापामिति ॥ दिविमेअन्यःपक्षोऽधोऽअन्यमचीकृषं ॥ कुवित्सोमस्यापामिति ॥ अहमस्मिमहामहोभिनभ्यमुदीषितः ॥ कुवित्सोमस्यापामिति ॥ गृहोयाम्यरंकृतोदेवेभ्योहव्यवाहनः ॥ कुवित्सोमस्यापामिति ॥ २ ॥ अ० ८ अ० ६ वर्ग २६-२७

आयुष्यमिति सूक्तस्य सनक-सनंदन-सनातनादयो ऋषयः हिरण्यं देवता आद्याश्चतस्रोऽनुष्टुभः पंचमी त्रिष्टुप् षष्ठ्यनुष्टुप् सप्तम्यतिशक्वरी अष्टमी-नवम्यौ त्रिष्टुभौ दशम्यनुष्टुबेकादशी पंक्तिः । सर्वेषां पठणे श्रवणे विनियोगः ।

हरिः ॐ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं ॥ इदं हिरण्यंवर्चस्वज्जैत्रायाविशतादिमाम् ॥ उच्चैर्वाजीपृतनाषाट्सभासाहंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्समाहिताः ॥ शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ ॥ तेनमांसूर्यत्वचमकरंपूरुषुप्रियं ॥ सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज ॥ अग्नेःप्रजातंपरियद्धिरण्यममृतंजज्ञेअधिमर्त्येषु ॥ यएनद्वेदसइदेनमर्हतिजरामृत्युर्भवतियोबिभर्ति ॥ १ ॥ यद्वेदराजावरुणोयदुदेवीसरस्वती ॥ इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे ॥ नतद्रक्षांसिनपिशाचास्तरंतिदेवानामोजःप्रथमजंह्येऽतत् ॥ योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ यदाबध्नन्दाक्षायणाहिरण्यंशतानीकायसुमनस्यमाना ॥ तन्नआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत् ॥ घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु ॥ प्रियंविश्वेषुगोप्त्रेषुमयिधेहिरुचारुचं ॥ अग्निर्येनविराजतिसूर्योयेनविराजति ॥ विराज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधंकुरु ॥

अ०८ अ० ७ परि०

सहस्रशीर्षेतिषोडशर्चस्य सूक्तस्य नारायणः पौरुषमानुष्टुभं त्रिष्टुभन्त्या ।

हरिः ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वाऽत्यतिष्ठद्दशांगुलम् ॥ पुरुषएवेदंसर्वं यद्भूतंयच्चभव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ तस्माद्विराळजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ १ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजंतसाध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यम् ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ २ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँअकल्पयन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुम् ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ३ ॥

अ० ८ अ० ४ वर्ग १७

अग्निमीळे इति वर्गद्वयस्य मधुच्छंदा अग्निर्गायत्री श्रवणे पठने विनियोगः ।

हरिः ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत ॥ सदेवाँएहवक्षति ॥ अग्निनारयिमश्नवत्पोषमेवदिवेदिवे ॥ यशसंवीरवत्तमम् ॥ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि ॥ सइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः ॥ देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि॥ तवेत्तत्सत्यमंगिरः॥ उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयम् ॥ नमोभरंतएमसि ॥ राजंतमध्वराणांगोपामृतस्यदीदिविम् ॥ वर्धमानंस्वेदमे ॥ सनःपितेवसूनवेऽग्नेसूपायनोभव॥ सचस्वानःस्वस्तये॥२॥

अ० १ अ० १ वर्ग १-२

समुद्रज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । त्रायन्तामिति तिसृणां सप्तर्षय आपोऽनुष्टुप् । इमा आप इति तिसृणामैतरेय अपोनुष्टुब्जगत्यनुष्टुभः ।

हरिः ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ॥ याआपोदिव्याउतवास्त्रवंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ त्रायंतामिहदेवास्त्रायंतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमरपाअसत् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ इमाआपःशिवतमाइमाःसर्वस्यभेषजीः ॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥

अ० ५ अ० ४ वर्ग १६



शं न इंद्राग्नी इति पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् ।

हरिः ॐ शंनऽइंद्राग्नीभवतामवोभिःशंनऽइंद्रावरुणारातहव्या । शमिंद्रासोमासुवितायशंयोःशंनऽइंद्रापूषणावाजसातौ ॥ शंनोभगःशमुनःशंसोऽअस्तुशंनःपुरंधिःशमुसंतुरायः । शंनःसत्यस्यसुयमस्यशंसःशंनोऽअर्यमापुरुजातोऽअस्तु ॥ शंनोधाताशमुधर्तानोऽअस्तुशंनऽउरूचीभवतुस्वधाभिः । शंरोदसीबृहतीशंनोऽअद्रिःशंनोदेवानांसुहवानिसंतु ॥ शंनोऽअग्निर्ज्योतिरनीकोऽअस्तुशंनोमित्रावरुणावश्विनाशं । शंनःसुकृतांसुकृतानिसंतुशंनऽइषिरोऽअभिवातुवातः ॥ शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोऽअस्तु । शंनऽओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ २८ ॥ शंनऽइंद्रोवसुभिर्देवोऽअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहश्रृणोतु ॥ शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः । शंनःस्वरूणांमितयोभवंतुशंनःप्रस्व१ःशम्वस्तुवेदिः ॥ शंनःसूर्यऽउरुचक्षाऽउदेतुशंनश्चतस्त्रःप्रदिशोभवंतु । शंनःपर्वताध्रुवयोभवंतुशंनःसिंधवःशमुसंत्वापः ॥ शंनोऽअदितिर्भवतुव्रतेभिःशंनोभवंतुमरुतःस्वर्काः । शंनोविष्णुःशमुपूषानोऽअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ शंनोदेवःसवितात्रायमाणः

मंल्रोगंनिदधन्मोऽअहंरिषं । एतांस्थूणांपितरोधारयंतु तेत्रायमःसादनातेमिनोतु ॥ प्रतीचीनेमामहनीष्वाःपर्ण मिवादधुः । प्रतीचींजग्रभावाचमश्वंरशनयायथा ॥२८॥

अ० ७ अ० ६ वर्ग २६–२७–२८

एष वां देवाइति द्वे पठेत्।

परावतो य इति सप्तदशर्चं पठेत्।

स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छन्दाः पवमानसोमः गायत्री।

हरिः ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतः॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहतं॥ द्रुणासधस्थमासदत् ॥ वरिवोधातमोभवमंहिष्ठोवृत्र हन्तमः ॥ पर्षिराधोमघोनां ॥ अभ्यर्षमहानांदेवानांवीति मंधसा ॥ अभिवाजमुतश्रवः ॥ त्वामच्छाचरामसितदि दर्थंदिवेदिवे ॥ इंदोत्वेनऽआशसः ॥ १ ॥ पुनातितेपरिस्रु तंसोमंसूर्यस्यदुहिता ॥ वारेणशश्वतातना ॥ तमीमण्वीः समर्यऽआगृभ्णंतियोषणोदश ॥ स्वसारःपार्येदिवि ॥ तमींहिन्वंत्यग्रुवोधमंतिबाकुरंदृतिं ॥ त्रिधातुवारणंमधु ॥ अभीऽइममघ्न्याऽउतश्रीणंतिधेनवःशिशुं ॥ सोममिंद्राय पातवे ॥ अस्येदिंद्रोमदेष्वाविश्वावृत्राणिजिघ्नते ॥ शूरोमघाचमंहते ॥ २ ॥

अ० ६ अ० ७ वर्ग १६



अक्षिभ्यामिति षड्ऋचं काश्यपो विवृहा यक्ष्मघ्नी अनुष्टुप् ॥ ६ ॥

हरिः ॐ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुका दधि। यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते॥ ग्रीवा भ्यस्तऽउष्णिहाभ्यःकीकसाभ्योऽअनूक्यात् । यक्ष्मंदो षण्यं१मंसाभ्यांबाहुभ्यांविवृहामिते॥ आंत्रेभ्यस्तेगुदाभ्यो वनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्यो विवृहामिते॥ ऊरुभ्यांतेऽअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां। यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ॥ मेहनाद्वनं करणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदं विवृहामिते ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ २१ ॥

यज्जाग्रत इति षण्णां शिवसंकल्पमंत्राणां प्रजापतिर्मनस्त्रिष्टुप् । सर्वेषां अभिषेके विनियोगः।

हरिः ॐ यज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैति ॥ दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथेषुधीराः ॥ यदपूर्वंयक्ष्ममंतःप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्जोतिरंतरमृतंप्रजासु ॥ यस्मान्न ऋतेकिंचनकर्मक्रियतेतन्मेमनःशिवसंकल्पमस्तु ॥ येनेदं भूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं॥ येनयज्ञस्तायते

सप्तहोतातन्मेमनःशिवसंकल्पमस्तु ॥ यस्मिन्नृचःसाम यजूꣳषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिꣳश्चित्तꣳसर्वमोतंप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ सुषारथिरश्वानिवयंमनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मेमनःशिवसंकल्पमस्तु ॥

## आज्यावलोकन–मंत्रः ।

रूपंरूपमित्यस्य भारद्वाजो गर्ग इंद्रस्त्रिष्टुप् ।
मुखावलोकने विनियोगः ।

वैदिकमंत्रः ।
ॐ रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥
(अ–४, अ–७, वर्ग–३३)

पुराणमंत्रः ।
आज्यं तेजः समुद्दिष्टं, आज्यं पापहरं स्मृतम् ।
आज्यं सुराणामाहार आज्ये देवाः प्रतिष्ठिताः ॥ इति ॥

卐卐卐卐卐卐卐卐